सव्वोऽवि जणो पावइ सुक्खं दुक्खं च एत्थ जम्मंमि । पुव्वकयकम्मपरिणइवसेण निक्कारणं
चिंतयंतस्स ॥ ३२ ॥ सव्वोऽवि जणो पावइ सुक्खं दुक्खं च एत्थ जम्मंमि । रज्जंतेउररद्वाइएहिं वद्वामि जेणाहं ॥ ३४ ॥
न उणं ॥ ३३ ॥ ता अत्थि मएऽवि कयं पुव्विं कम्मं विसिद्वसुहहेऊ । तं भुज्जइ अण्णदिणे एवं जम्मंतरेऽवि फुडं ॥ ३५ ॥ तहा—
लोयपसिद्धो य इमो ववहारो जं विढप्पइ किलेऽज्ज । तं भुज्जइ अण्णदिणे एवं पुण्णेऽवि णायव्वं ॥ ३६ ॥ ता जाव न
अइवड्ढिओवि रासी निच्चुवभोगेण अणुवचीयंतो । खिज्जइ जणस्स अइरा एवं पुण्णेऽवि णायव्वं ॥ ३७ ॥ पुव्वकयसुकय-
गलइ मई, चलइ न दिट्ठी सुई न पम्हुसइ । सामंतमंतिमाईजणोऽवि आणं न लंघेइ ॥ ३८ ॥ तं च इमं—आपुच्छिऊण लोयं
सेसाणुभावओ ताव तस्स वुड्ढिकए । मज्झवि जुत्तं काउं परलोयहियं किमवि कज्जं ॥ ३९ ॥ एत्थंतरंमि पढियं बंदिणा काल-
रज्जे संठाविऊण सिवभद्दं । विहरामि दिसापुंछियतावसदिक्खं गहेऊणं ॥ ४० ॥ किं किं सिद्धं किं व न सिद्धमिति जोयणत्थंव
निवेयणत्थे—उदयायलमारोहइ सूरो तह देव ! विविहकज्जेसु । कयसयलगोसकिच्चो अत्थाणभुवं समणुपत्तो ॥ ४१ ॥
॥ ४० ॥ आयण्णिऊण एयं, सयणीयाओ समुट्ठिऊण तओ । भणइ नियाभिप्पायं पायं सीहासणानिविट्ठो ॥ ४२ ॥ बहुमाण्णिओ
तत्थ य आहूय असेसमिलियसामंतमंतिमाईणं । जइ एवं ता सिग्घं दिज्जउ रज्जं कुमारस्स ॥ ४३ ॥ एत्थंतरंमि पत्तो
य तेहिं तयभिप्पाओ। तओ पुणो आह ।

पडिहारनिवेइओ निवसयासे । सिद्धवई नामेणं जोइसिओ सत्थनिम्माओ ॥ ४४ ॥ आसीसदाणपुव्वं भणियमिमेणं-अज्ज तिही सुपसत्था वारो सारो वरं च नक्खत्तं। जोगेसु सिद्धजोगो नरिंद ! करणं च सुइकरणं ॥ ४५ ॥ मंगलकज्जेसु दिणं सुपसत्थं मंगलाण आवासं । ता कुणसु समीहियकज्जमज्जणमणवज्जगुणसज्ज ! ॥ ४६॥ सिद्धवइवयणमायण्णिऊण राया मणंमि चिंतेइ । अणुकूलदेवजोगे नराण तं किं न जं घडइ ? ॥ ४७ ॥ जइ फुडइ अंबरं दलइ मेइणी चलइ ठाणओ जलही। तहवि हु सिज्झइ कज्जं माणिच्छियं पुण्णवंताणं ॥ ४८ ॥ अण्णह--कत्थ मई मह एसा कहिं च सामंतलोयबहुमाणो । सिद्धवइआगमो कत्थ कत्थ सुपसत्थदिणजोगो ॥ ४९ ॥ इय चिंतिऊण रन्ना सामंताईण जोइयं वयणं । तेहिवि भणियं कुमरो बहिप्पउ देव ! जइ एवं ॥ ५० ॥ तो रन्ना पडिहारो आइट्ठो सोऽवि तं समाहूय । सिग्घं चिय संपत्तो अत्थाणभुवं कुमारो य ॥ ५१ ॥ जणयाइयाण तेसिं जहोचियं विहिय विणयपडिवत्ती । नरवइणा आइट्ठे उवविट्ठो आसणे पवरे ॥ ५२ ॥ तओ भणियं मंतिणा--परलोयहियं काउं, समुज्जओ एस वच्छ ! तुह जणओ । निव्विण्णकामभोगो तइ रज्जभरं निवेसेउं ॥ ५३ ॥ ता वच्छ ! तए इण्हिं अप्पा तह कहवि संठवेयव्वो । जह पवरपत्तभूओ रज्जसिरीए हवइ ठाणं ॥ ५४ ॥ जओ भणियं--" नोद-

न्वानर्थितामेति, न चाम्भोभिर्न पूर्यते । आत्मा तु पात्रतां नेयः, पात्रमायान्ति सम्पदः ॥ ५५ ॥" इय एवमाइ बहुयं सिक्खविऊणं ठियंमि मंतिंमि । नेमित्तिएण भणियं आसन्नं वट्टए लग्गं ॥ ५६ ॥ तो रन्ना कारविया सिग्घं रज्जा-हिसेयसामग्गी । पत्तंमि लग्गसमए उच्छलिए तूरनिग्घोसे ॥ ५७ ॥ जयजयरवसंवलिए मंगलसद्दे पवित्थरंतम्मि । गुरुविच्छड्डेण कओ रज्जभिसेओ कुमारस्स ॥ ५८ ॥ कइहिवि दियहेहि तओ तणयं आपुच्छिऊण सुहदिवसे । रायावि दिसापुंखियतावसदिक्खं अह पवण्णो ॥ ५९ ॥ तो दिक्खासमए च्चिय गहिओ गुरुओ अभिग्गहो तेणं । मज्झं जावज्जीवं छट्ठंछट्ठेण पारणयं ॥ ६० ॥ उववासादिणे आयावणा य तह उड्ढबाहुणा निच्चं । सूराभिमुहेण मए कायव्वा पारणादिणे य ॥ ६१ ॥ कंदफलमूलमाई पुव्वाइदिसा कमेण गहियव्वं । एवमभिग्गहिओ सो पढमछट्ठस्स पारणए ॥ ६२ ॥ आयावणभूमीओ पच्चोरुहिऊण आगओ उडयं । कंदाइआणणत्थं किढिणस्संकाइउं गहिउं ॥ ६३ ॥ गंगानईएँ वच्चइ तत्थ य ण्हाणाइयं करेऊणं । कुसजलकलसविहत्थो पुव्वदिसिं पसरिओ भणइ ॥ ६४ ॥ इह सोममहाराया सिवरायरिसिं सुधम्ममग्गठियं । अभिरक्खउ अणुजाणउ य कंदफलमूलसमिहाइ ॥ ६५ ॥ एवं भणिऊण तओ जलेण अब्भोक्खिऊण तिक्खुत्तो । कंदफलमूलमाईण

किढिणसंकाइगं भरिउं ॥ ६६ ॥ सामिहाओ य गहेउं पुणोवि उडयंमि आगओ खिप्पं । मोत्तूण तयं गिण्हइ अगणिं तो पाडए अग्गिं ॥ ६७ ॥ समिहमहुसप्पिणीवारगाइहोमं सवित्थरं काउं । निव्वत्तियवइसबली फलाइ आहारए पच्छा ॥ ६८ ॥ बीयंपि छट्ठखमणं तहेव आढवइ किं तु पारणए । दक्खिणदिसाइ गंतुं अणुजाणावेइ जमरायं ॥ ६९ ॥ तइयंमि पच्छिमाए वरुणं तुरियंमि उत्तरादिसाए । अणुजाणावइ धणयं एवं दिसचक्कवालेणं ॥ ७० ॥ छट्ठाओ छट्ठाओ से पारंतस्स कइहिवि दिणेहिं । तयवरणखओवसमओ विभंगनाणं समुप्पण्णं ॥ ७१ ॥ पासइ य सत्त दीवे सत्त समुद्दे य एत्थ लोयंमि । तेण परं वोच्छिण्णे मन्नइ दीवे समुद्दे य ॥ ७२ ॥ तो चिंतइ किं इमिणा उप्पण्णे-णावि मज्झ नाणेणं ? । हत्थिणपुरंमि गंतुं जं न पयासेमि लोयस्स ॥ ७३ ॥ जओ भणियं—किं ताए सिरीए पीवराए ? जा होइ अन्नदेसंमि । जा य न मित्तेहि समं जं च अमित्ता न पेच्छंति ॥ ७४ ॥ ( ग्रन्थाग्रम् १००० । ) इय चिंतिऊण वच्चइ तत्तो हत्थिणपुरंमि नयरंमि । आइक्खइ लोयाणं दीवसमुद्दाण परिमाणं ॥ ७५ ॥ तइया य तंमि नयरे गामागरनगरपट्टणाए(ई)सु । विहरंतो संपत्तो सामी सिरिवद्धमाणजिणो ॥ ७६ ॥ जो य—सुराविसरपणयपाओ, निग्घाइ-यघाइकम्मसंघाओ । केवलनाणसहाओ वसीकयासेसगुणजाओ ॥ ७७ ॥ सहसंबवणुज्जाणे समोसढो गोयमाइ-

समणजुओ । नयरजणो य समग्गो समागओ वंदणनिमित्तं ॥ ७८ ॥ धम्मसवणत्थियाए सदेवमणुयासुराए पारिसाए । एत्थंतरंमि भयवं ! धम्मं कहिउं समाढत्तो ॥ ७९ ॥ भो भो देवाणुपिया ! सव्वे सुक्खत्थिणो जणा एत्थं । तं पुण न अत्थि कत्थवि धम्मविहूणाण जंतूणं ॥ ८० ॥ नारयतिरियनरामरभेएण चउव्विहावि जेण जिया । दुक्खोवद्दुयदेहा सुकयविहूणा परियडंति ॥ ८१ ॥ तथाहि—अणवरयं पच्चंता तत्तकवल्लीसु तिव्वदुक्खत्ता । किं पाउणंति सत्ता सोक्खं नरयंमि संपत्ता ? ॥ ८२ ॥ तिरियावि छुहपिवासादहणंकणताडणाइदुहवासा । सुहिणो कत्थ हयासा अइभारारोवघणसासा ? ॥ ८३ ॥ जरमरणरोगानिट्ठप्पओगसोगाइदुक्खतविएहिं । मणुएहिवि सुहवत्ता दूरंदूरेण परिचत्ता ॥ ८४ ॥ ईसाविसायचय(चव)णाइमाणसुमहिड्ढिवइरिविहियाणं । देवा णवि देवलोए दुक्खाणवि पाविआ अंतं ॥ ८५ ॥ ता भो महाणुभावा ! जइ सच्चं चिय सुहत्थिणो तुब्भे । ता सेविऊण धम्मं अइरा दुक्खक्खयं कुणह ॥ ८६ ॥ जओ—जो दुग्गइगमणाओ निवारओ धारओ य सुहठाणे । सो धम्मो नाणदंसणचरणआराहणारूवो ॥ ८७ ॥ दंसणनाणचरित्ते सुपवित्ते सयलदोसपरिचत्ते । भावेण जे निसेविंति जंति ते झत्ति परमपयं ॥ ८८ ॥ जत्थ न जरा न मच्चू न वाहिणो नेय परिभवो न भयं । तं भण्णइ परमपयं सासयसोक्खं

निराबाहं ॥ ८९ ॥ इय एवमाइधम्मं सोऊणं केऽवि भवविरत्तमणा । सव्वविरई पवन्ना अण्णे उण देसविरयंति ॥ ९० ॥ तइया य छट्ठखमणाउ पारणट्ठाएँ निग्गओ भिक्खं । नयरंमि परियडंतो गोयमसामी सुणइ वत्तं ॥ ९१ ॥ सिवरायरिसी एवं अइसयणाणेण पासिउं भणइ । अस्सि लोए दीवा सत्त समुद्दा य सत्तेव ॥ ९२ ॥ तेण परं वोच्छिण्णा न संति दीवा व सागरा वावि । एवं सोउं गोयमसामी संकाउरो जाओ ॥ ९३ ॥ तो गहिय-भत्तपाणो आगंतूणं विहीएँ भुंजित्ता । परिसाए मज्झगयं सामिं विणओणओ भणइ ॥ ९४ ॥ जण्णं सिवरायरिसी दीवसमुद्दाण संखविसयंमि । लोयस्स पुरो जंपइ तं सच्चं अहव मिच्छन्ति ॥ ९५ ॥ सविसेसं उवउत्ता जाया एत्थं-तरंमि सा परिसा। चिंतइ य सुट्ठु पुट्ठं अम्हवि चित्तट्ठियं एयं॥ ९६॥ एवं पुट्ठो सामी पभणइ गंभीरमहुरवायाए । सिव-रायरिसी गोयम ! विभंगनाणी भणइ मिच्छा ॥ ९७ ॥ जंबुद्दीवाइया दीवा लवणाइया समुद्दा य । होंति असंखा जम्हा दुगुणा दुगुणा। तिरियलोए ॥९८॥ तं सोउं परिसाए सिवरायरिसिस्स साहियं सव्वं । सोवि तहा कुणइ तहिं संकं कंखं विगिच्छं च ॥ ९९ ॥ मिच्छत्तरसऽइयारे, वट्टंतस्स य विभंगणाणं तं । परिवडियं नवि पेच्छइ किंचिवि दिट्ठि-प्पहाईयं ॥ १०० ॥ तो चिंतिउं पयत्तो पुव्वमहं सव्वमेव पासंतो । इण्हिं किंपि न पासामि कारणं किंचि ता होज्जा

जिणपासं ॥१०२॥ ॥ १०१ ॥ अहवा अइसयनाणिं, तमेव गंतूण वंदिऊण तहा। पुच्छामि सव्वमेयं इय चिंतिय जाइ जिणपासं ॥१०२॥ इय चिंतिऊण वंदित्ता आपुच्छइ जं जं सामीवि कहइ सेसं तं। तो पडिबुद्धो चिंतइ सव्वन्न णिच्छएणेसो ॥१०३॥ इय चिंतिऊण ॥ १०४ ॥ अण्णाणपासएणं विणयावबद्धसीसंजली भणइ णाह !। काउं महापसायं नियादिक्खं मज्झ वियरेसु ॥ १०५ ॥ इय एवं पभणेंतो स छलिओऽहं णाह ! एत्तियं कालं। तेण न नाओ तं सामि! सयलतेलोक्कपयडोऽवि ॥ १०६ ॥ अप्पेणवि दिक्खिओ सामिणा नियकरेण। सिक्खाविओ य समयं सामायारिं च साहूणं ॥ १०७ ॥ अंतंमि खवगसेढिं कालेणं सुत्तत्थविसारओ य संपन्नो। परिपालिऊण बहवे वरिसे छउमत्थपरियायं ॥ १०८ ॥ केवलिपरियाएणवि कित्तियकालं आरुहिऊणं विसुद्धझाणेणं। णिद्दड्ढघायकम्मो उप्पाडइ केवलं नाणं ॥ १०९ ॥ एवं सुपसत्थमिणं सिवरायरिसिस्स साहियं इहऽच्छिउं पच्छा। सेलेसिं पडिवज्जिय सिद्धो नीसेसहयकम्मो ॥ ११० ॥ एयाणुसारउच्चिय पायं मोग्गलकहावि दट्ठव्वा। किं चरियं। वित्थरओ जह दिट्ठं भगवइइक्कारससयंमि ॥ १११ ॥ अरिंस लोए उड्ढं सुरा य कप्पा य बंभलोयंता। तेण परं वोच्छिन्ने मन्नइ तु विभंगो से उड्ढलोयविसओ समुप्पण्णो ॥ १११ ॥ सेसं इहंपि तंचेव जाव पुच्छेइ गोयमो वीरं। सामीवि भणइ गोयम ! देवा सव्वट्ठ- देवे य कप्पे य ॥ ११२ ॥

सिद्धंता ॥११३॥ जम्हा सोहम्माई कप्पा उड्ढं दुवालस हवंति । तत्तो नव गेवेज्जा तदुवरि पंचुत्तरा पंच ॥११४॥ सेसं तहेव मोग्गलमुणीवि जावुत्तमं पयं पत्तो । संजायकेवलो सव्वकम्माविगमं करेऊणं ॥ ११५ ॥ मोग्गलरिसिस्स चरियं एवं संखेवओ समक्खायं । वित्थरओ विण्णेयं विवाहपन्नत्तिअंगाओ ॥११६॥ सुयएविपसाएणं सत्तममइयार-दारमक्खायं । भंगद्दारं एत्तो कमपत्तं तं निसामेह ॥ ११७ ॥

छट्ठेणं आयावण विभंगनाणेण जीवजाणणया ।
ओही केवलनाणं, तो भंगो होइ मिच्छस्स ॥ १० ॥

'षष्ठेन' उपवासद्वयलक्षणेन, अष्टमाद्युपलक्षणं चैतत्, तेन तपस्यत इति गम्यते, 'आयावण' त्ति आतापनां–सूर्याभिमुखोर्ध्वबाहुस्थानावस्थानलक्षणां, कुर्वत इत्यध्याहारः, 'विहंगनाणेण' त्ति विभङ्गो–मिथ्यात्व-कलङ्कितो विपरीतो बोधः अवध्यज्ञानं, यतः–"सदसदविसेसणाओ भवहेउजहिच्छिओवलंभाओ । नाणफलाभावाओ मिच्छद्दिट्ठिस्स अन्नाणं ॥ १ ॥" तेन कस्यापि 'जीवजाणणय' त्ति जीवज्ञानं–प्राण्यवबोधनमुत्पन्नमिति गम्यते, ततः 'ओहि' त्ति अवधिः–तदावरणीयकर्मक्षयोपशमेन रूपिद्रव्यविषयः सम्यग्बोधः संजायते, 'केवलणाणं'

ति केवलज्ञानं—घातिकर्मक्षयेण लोकालोकाविर्भावकं संपूर्णज्ञानं, तच्च भवतीति शेषः, एवं कदाचित् क्रमेण 'भङ्गः' विनाशः 'भवति' जायते मिथ्यात्वस्येति । ननु विभङ्गेन जीवान् जानतः कथमवधिर्भवति, ? अवधिविभङ्गयोर्ज्ञानाज्ञानरूपयोः परस्परपरिहारस्थितत्वात् ?, सत्यं, परिणामविशेषात्, यथा मिथ्यात्वोदयवर्त्त्यपि सम्यक्त्वं याति तथेहापीत्यदोषः, उक्तञ्च—" मिच्छाओ संकंती अविरुद्धा होइ सम्ममीसेसु । मीसाओ वा दोसुं सम्मा मिच्छं न उण मीसं ॥ १ ॥ " विभङ्गज्ञानी चावधिज्ञानी भवन्मतिश्रुतावधिसम्यक्त्वानि युगपल्लभते, यत उक्तम्—" विब्भंगाओ परिणमं सम्मत्तं लहइ मइसुओहीणि । तयभावंमि मइसुयं सुयलंभं केइ उभयंति ॥ १ ॥ " इति गाथाऽक्षरार्थः ॥ भावार्थस्तु दृष्टान्तबलेनावसेयः, स चायम्—

आसीद्बालतपस्वी शिवशर्म तपोधनो धननिरीहः । षष्ठाष्टमदशमादिषु तपोविशेषेषु बद्धरतिः ॥ १ ॥ तस्यान्यदोर्ध्वबाहोरातापनया स्थितस्य रविदृष्टेः । कर्मक्षयोपशमतो विभङ्गबोधः समुदपादि ॥ २ ॥ संक्लिश्यमानसुविशुद्ध्यमानजीवांश्च तेन विज्ञाय । उत्पादगमननित्यत्वयोगिनो जीवभावांश्च ॥ ३ ॥ चिन्तयितुमेष लग्नो रागद्वेषादिवशगता जीवाः । विपरीतबोधवन्तः संक्लिश्यन्तेऽत्र संसारे ॥ ४ ॥ रागादितिमिरनिकरं विवेकदीपेन ये तिरस्कृत्य ।

सद्दृष्टितत्त्ववेश्मानि विशन्ति ते झगिति शुद्ध्यन्ति ॥५॥ एवं च तस्य मार्गानुसारिचिन्ताक्रमेण संजाता । अवधिज्ञानप्राप्तिः सम्यक्त्वमतिश्रुतैः साकम् ॥ ६ ॥ उपपत्तिक्षममेतत्, येन जिनभद्रगणिभिरप्युक्तम् । " अणभिनिवेसा हु कयाइ होइ सम्मत्तहेऊवि " ॥ ७ ॥ तदनु शुभाध्यवसायस्य–निहतघनघातिकर्मनिचयस्य । अक्षयमनन्तमनुपममुत्पन्नं केवलज्ञानम् ॥ ८ ॥ एवं कादाचित्कक्रमेण कस्यापि सर्वथा भवति । मिथ्यात्वस्य विनाशः पुनरुत्पत्तेरभावेन ॥ ९ ॥ एवं भङ्गद्वारं श्रुतदेव्यनुभावतः समाख्यातम् । क्रमसंप्राप्तं वक्ष्ये, नवममितो भावनाद्वारम् ॥ १० ॥

**भावण जह तामलिणा इड्ढीविसया पुणो अणसणं च ।**
**पुणरवि खोहणकाले, लहुकम्माणं इमा मेरा ॥ ११ ॥**

भाव्यत इति भावना अनित्यत्वादिरूपा 'यथा' येन प्रकारेण '**तामलिना**' तामलिश्रेष्ठिना गृहावस्थितेन भावितेति शेषः, ह्रस्वत्वं च भावनाशब्दस्य प्राकृतत्वात्, किंविषया ? इत्याह–'**ऋद्धिविषया**' ऋद्धिः-सम्पत् सा विषयो यस्याः सा तथा, कथं भाविता ?, यथोक्तं केनचित्–" उद्भूताः प्रथयन्ति मोहमसमं नाशे महान्तं नृणां, सन्तापं जनयन्त्युपार्जनविधौ क्लेशं प्रयच्छन्ति च । एता नीलपयोदगर्भवि-

‘ पुनरनशनं चे ’ति कर्तु-
लसद्विद्युल्लताचञ्चलाः, काले कुत्र भवन्ति हन्त ! कथय क्षेमावहाः सम्पदः ? ॥ १ ॥ ” शरीरादिविषयेति विशिनष्टि, सा
कामेनेत्यध्याहाराद् यथा भावना भावितेति संटङ्कः, पुनःशब्दो विशेषणार्थः, मलमूत्ररुधिरवसतिः कस्य न वैराग्यकृद्देहः ?
चैवम्—“ अनुसमयमरणशरणो विविधाऽऽधिव्याधिबाधया व्यथितः । दण्डमादाय लोकोऽयं, शुनः काकांश्च
॥ १ ॥ ” व्यासेनाप्युक्तम्—“ यदि नामास्य कायस्य, यदन्तस्तद् बहिर्भवेत् । यावच्चेन्द्रियशक्तिरप्रति-
वारयेत् ॥ १ ॥ ” अत एव कैश्चिदुपदिष्टम्—“ यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा, प्रत्युद्यमः
हता यावत्क्षयो नायुषः । आत्मश्रेयसि तावदेव वपुषा कार्यः प्रयत्नो महान्, आदीप्ते भुवने तु कूपखननं क्षोभ-
कीदृशः ? ॥ १ ॥ ” ‘ पुनरपि क्षोभणकाले ’ इति अपिश्चार्थस्तस्य व्यवहितप्रयोगात् न केवलमनशनकाले भावि-
णकाले च—अनशनप्रतिपत्तिसमयसमायातबल्यसुरकुमारारब्धध्यानच्यावनसमये च पुनः—भूयो यथा भावना इति
तेति पूर्वपदानुवृत्तेर्योजना, यत्तदोर्नित्यसम्बन्धात् तथा, किं ?—भावयितव्येत्याहृतपदेन संटङ्कः, कुत एवम् ? भावार्थः
चेद् यतो लघुकर्म्मणामेषा मर्यादेति गाथाऽक्षरार्थः, ॥ मिथ्यात्वभावना तु मिथ्यादृष्टिस्वामिकत्वादिति भावनीयं,
कथानकगम्यस्तच्चेदम्—

अत्थि इहेव जंबुद्दीवे दीवे भारहे वासे असेसदेसावयंसभूओ भूयप्पेयजक्खरक्खसाइदुट्ठोवद्दवराहिओ हियाहियत्थविसयविन्नाणाइसयसमिद्धासियविसिट्ठलोयाहिट्ठिओ वंगो नाम जणवओ, जो य वयनिवहनिरंतरोवि अवओ, खयप्पहाणगामनगराइट्ठाणोऽवि अक्खयप्पहाणगामनगराइट्ठाणो रम्मयाए परिहवइ सुरलोयं, तत्थ य ठाणठाणनिरिक्खिज्जमाणजिणभवणभवणाइविचित्तचित्तमंडवोवविट्ठविलासिलोयसच्चविज्जंतसारनट्टगीयवाइयाइविलासवित्थरा तामलित्ती नाम नयरी, जा य परिसक्कंतविलासिणिमाणिनेउररावमुहरियदियंता नियविहववित्थरं साहइ व्व देसागयनराण, तत्थ य धणधन्नदुपयचउप्पयाइसमिद्धिसमद्धासिओ सियकिरणकरनियरसरिसपसरंतकित्तिसंभारभरियभुयणंतरो तराणि व्व नियबंधुकमलाणं चंदो व्व कामिणीनयणकुमुयाणं इंदो व्व विबुहजणमणाणं परमाणंददायी तामली नाम मोरियवंससंभवो गाहावई होत्था, जो य चंदो सूरो इंदो पुण्णयणपहू विहस्सई व भाइ सोमत्ततेयईसरियदाणमइपयरिसगुणेहिं, अण्णया य तस्स सुहसेज्जाए ठियस्स रयणीए पच्छिमजामे कुडुम्बजागरियं जागरमाणस्स एवं चिंता समुप्पण्णा, जहा–पुव्वोवज्जियसुकयसंभारवसओ अत्थि मज्झ पुरिसपरंपरागयं अपरिमियं दविणजायं समं समसुहदुक्खसहपंसुकीलियवयंसेहिं

संवलियं । नच्चंतअसुररमणीमणिनेउररावरेहिल्लं ॥ १ ॥ विविहरसभावसंगयदइच्चागिज्जंतगेयरमणिज्जं । तच्चित्तरंजणत्थं आढत्तं तेहि पेच्छणयं ॥ २ ॥ सोऽवि चिंतेइ—गीयं पलावमेत्तं नट्टंपि विडंबणा विसं विसया । अन्नं किमेत्थ सारं ? जंमि मणो मज्झ गच्छेज्जा ॥ ३ ॥ ते य पेक्खणयावसाणे विण्णविउं पयत्ता—अम्हे असुरकुमारा बलिचंचाराय-हाणिवत्थव्वा । दिव्वेण कयाऽणाहा, तुम्ह सयासं समणुपत्ता ॥ ४ ॥ परकज्जरया तुब्भे, तुब्भे पणइयणवच्छला नाह ! । अस्सामियाण अम्हं ता तुब्भे सामिणो होह ॥ ५ ॥ काउं नियाणमेत्थं उप्पण्णा अम्ह सामिणो ताहे । माणह असुरिंदसिरिं अणुहवह जहिच्छियसुहाइं ॥ ६ ॥ नाणाविहकीलाहि य कीलह समयं दइच्चरमणीहिं । आणवह असुरजोहे हिययाहिप्पेयकज्जेसु ॥ ७ ॥ एसा असुरवरिद्धी एए असुरा इमाओ असुरीओ । तुम्हायत्तं सव्वं होही समुइण्ण-पुण्णवसा ॥ ८ ॥ एवमाइविन्नत्तिं तेसिं सुणिऊण चिंतियं—एयं खु जए पयडं, सुकयं दुकयं व एत्थ जम्मंमि । जं उवचिणेइ जीवो अणुहवइ तयं परभवम्मि ॥ ९ ॥ तथा चोक्तम्—" शुभाशुभानि कर्माणि, स्वयं कुर्वन्ति देहिनः । स्वयमेवोपभुज्यन्ते, दुःखानि च सुखानि च ॥ १ ॥ सुखदुःखानां कर्त्ता हर्त्ताऽपि न कोऽपि कस्य-चिज्जन्तोः । इति चिन्तय सद्बुद्ध्या पुराकृतं भुज्यते कर्म ॥ २ ॥ " एवं च मएवि कयं, जं कम्मं किंपि तस्स

सयमेव । होही फलं नियाणं निरत्थयं किं करेमि तओ ? ॥ १० ॥ किं च-विसयसुहोवदंसणेणं इमे मम उवलोभिंति, तं च परमत्थओ सुहमेव न होइ, जओ भणियं—" दुक्खाभावो न सुहं न ताइ सोक्खाइ जाइं सोक्खाइं । मोत्तूणऽसुहाइ सुहाइं जाइं ताइं चिय सुहाइं ॥ १ ॥ " अविय विसाओऽवि दारुणविवागा विसया, कहमेएसु सोक्खबुद्धी जणस्स ?, तथा चोक्तम्—" विषस्य विषयाणां च, दूरमत्यन्तमन्तरम् । उपभुक्तं विषं हन्ति, विषयाः स्मरणादपि ॥ १ ॥ " एवमाइभावणानिविट्ठचित्तेणं च तेण ते अणाढाइज्जमाणा जहागयं पडिगया । सोऽवि अत्तणा सट्ठिदिणाइं अणसणं पालिऊण मओ संतो ईसाणे कप्पे ईसाणवडिंसए विमाणे ईसाणिंदत्ताए उववण्णो, जओ य अट्ठावीसलक्खसंखाण विमाणाणं असीइसहस्सपरिमाणाणं इंदसामाणियाणं तेत्तीसण्हं तायतीसगाणं चउण्हं लोगपालाणं अट्ठण्हं अग्गमहिसीणं अन्नेसिं च बहूणं वेमाणियाणं देवाणं देवीणं च सामी । इओ य—ते बलिचंचारायहाणिवत्थव्वा असुरकुमारा तं अकयनियाणं ईसाणिंदत्ताए उववण्णं जाणिऊण कोवाइट्ठा तमेत्र पएसमागंतूण तामलिसरीरं वामपाए सुंबेण बंधिऊण तामलित्तीए नयरीए मज्झंमज्झेणाकड्ढंति, उग्घोसिंति य—एस णं तामली बालतवस्सी सयंगहियलिंगे पावकम्मकारी मएवि सिरिहिरिपरिवज्जिए संपन्ने, ता मा कोई इमस्स नामग्गहणंपि

करेज्ज, एत्थंतरंमि य ईसाणिंदेण—को अहं कुओ वा केण वा सुकएणं एत्थुववण्णोत्ति, एमाइउवउत्तेण ओहिणा णाओ पुव्वभवो, दिट्ठा य ते तहा आघोसणापुव्वं नियसरीरं कड्ढोयड्ढिं कारिंता, तओ आसुरुत्तेण कूरदिट्ठीए निज्झाइऊण तेसिमुवरिं मुक्का तेउलेसा, तीए डज्झमाणा महावेयणत्ता किमेयमयंडे अम्ह आवडियंति चिंतंता ओहिणा ईसाणिंदं कुवियं पासित्ता पुणो २ खामिंति, अपिय—" उवसंहर उवसंहर, कोवं सामी ! य पसीय अम्हाणं । न पुणो अविणयमेवं काहामो एत्थ जीवंता ॥ १ ॥ एक्कं अवराहमिमं खमेसु पणइयणवच्छला जेण । हुंति इहं सप्पुरिसा दुहिए करुणापहाणा य ॥ २ ॥ एमाइ मन्नावंते य ते दट्ठुं ववगयकोवेण ईसाणिंदेण साहरिया तेउलेसा, गया निव्वेयणा ते सट्ठाणं, सोऽवि पयट्टो तक्कालोचिएसु मज्जणसिद्धाययणगमणपोत्थयवायणाइवावारेसु, तओ य सिद्धाययणदंसणुप्पन्नसम्मत्तपरिणामो देवभवाणुरूवाइं अणुहविऊण नाणाविहसुहाइं अप्पडिहयसासणो होऊण सामाणियाइदेववग्गेसु कीलिऊण जहिच्छमच्छराहिं समं विविहविणोएहिं पालिऊण दो सागरोवमाइं साहियं नियमाउयं ततो चुओ महाविदेहे सिज्झिही । सुयएविपसाएणं चरियं तामलिरिसिस्स कहियमिणं । संखेवेणं नेयं वित्थरओ भगवईए उ ॥ १ ॥ व्याख्यातं मिथ्यात्वभावनाद्वारं नवमं, तद्व्याख्यानाच्च समर्थितं

मिथ्यात्वद्वारम्, अधुना तदनन्तरोदिताद्वितीयसम्यक्त्वद्वारस्यावसरः, तदपि यादृशादिभिर्नवभिर्भेदैर्व्याख्येयम्, अतो 'यथोद्देशं निर्देश' इति न्यायात्प्रथमद्वारेण तावदाह—

जियरागदोसमोहेहिं भासियं जमिह जिणवरिंदेहिं ।
तं चेव होइ तत्तं इय बुद्धी होइ सम्मत्तं ॥ १२ ॥

'जियरागदोसमोहेहिं'ति रज्यते—शुद्धस्फटिकनिर्मलोऽप्यात्मा अन्यथात्वमापाद्यतेऽनेनेति रागः—मायालोभकषायरूपः स च द्वेष्टि-तांस्तान् प्राणिनः प्रत्यप्रीतो भवत्यनेनेति द्वेषः—क्रोधमानकषायलक्षणः, तथा च वाचकमुख्यः—" मायालोभकषायावित्येतद्रागसञ्ज्ञितं द्वन्द्वम् । क्रोधो मानश्च पुनर्द्वेष इति समासनिर्दिष्टः ॥ १ ॥" स च मुह्यति—हेयोपादेयार्थेषु विचित्तो भवत्यनेनेति मोहः—अज्ञानं मोहयतीति वा मोहः—मोहनीयमेव मिथ्यात्वादिस्वभावं स च ते जिताः—पराभूता निर्मूलोच्छेदकरणेन, नतु सतामेव निष्प्रभत्वमात्रापादनेन, सर्वथा घातिकर्मविनाशेन केवलोत्पादे भगवतां देशनासम्भवात्, रागद्वेषमोहा यैस्ते तथा तैः जितरागद्वेषमोहैः 'भाषित' प्रतिपादितं 'यत्' जीवादि 'इह' जगति जयन्ति रागादीनिति जिनाः—छद्मस्थवीतरागास्तेषां वराः—सामान्यकेवलिनस्तेषा-

मिन्द्राः—चतुस्त्रिंशदतिशयैश्वर्यवन्तस्तीर्थकरास्ते जिनवरेन्द्रास्तैः, एतच्च विशेष्यपदं जितरागद्वेषमोहैरिति च विशेषण, अनेन च सम्यक्त्वलक्षणभणने हेतुः सूचितः, तथा चोक्तम्—" वीतरागा हि सर्वज्ञाः, मिथ्या न ब्रुवते वचः । तस्मात्तेषां वचः सत्यं, तथ्यं भूतार्थदर्शनम् ॥ १ ॥ " इति, ' तं चेव ' त्ति तच्छब्दो यच्छब्दापेक्षया "चः" पूरणे ' एवः ' अवधारणे स च भिन्नक्रमः ततस्तदेव ' भवति ' जायते ' तत्त्वं ' परमार्थसत्, नान्यद्रागादिदोषोपहतकपिलादिप्रणीतं, रागादिदोषवत्ता च कपिलादीनामसद्भूतैकान्तनित्यादिभावदेशनागम्येति भावनीयं, ' इति ' एवंविधा ' बुद्धिः ' मतिः ' भवति ' जायते ' सम्यक्त्वं ' सम्यग्दर्शनमिति। ननु बुद्धिर्नाम मतिः, सा च ज्ञानमेव, सम्यक्त्वं तु तत्त्वश्रद्धानं, यदाह वाचकः—' तत्त्वार्थश्रद्धानं सम्यग्दर्शनं ( तत्त्वा १-२ ) मिति, ततो यज्ज्ञानं न तद्दर्शनमिति कथमेतत् ?, अत्रोच्यते, बुद्धिजन्या तत्त्वरुचिरपि बुद्धिशब्देन विवक्षिता, कार्ये कारणोपचारात्, नच कार्यकारणभावोऽप्यनयोर्नास्तीति वाच्यं, तथा च पूज्याः—' नाणमवायधिईओ दंसणमिहं जहोग्गहेहाओ । तह तत्तरुई सम्मं रोइज्जइ जेण तं नाणं ॥ १ ॥ ' अथवा सरससुन्दर आनन्दहेतुरयं मोदक इत्यादि गुणदर्शिका मतिर्लोके रुचिः प्रतीता तद्विपरीता दोषग्राहिणी त्वरुचिः, तथेहापि लोकरूढ्या रुचिरूपैव बुद्धिर्विवक्षितेति न कश्चिद्दोष इति गाथार्थः ॥ १२ ॥

सम्यक्त्वे यादृशद्वारगाथेयमुपवर्णिता यथाबोधमितस्तस्या भेदद्वारं प्रपञ्च्यते—

**एगविहदुविहतिविहं चउहा पंचविह दसविहं सम्मं ।**
**दव्वाइकारगाइयउवसमभेएहिं वा सम्मं ॥ १३॥**

'एगविहदुविहतिविहं' ति, अत्र " नीया लोवमभूया य आणिया दीहबिंदुदुब्भावा " ( नीता लोपं आनीताश्चाभूता दीर्घत्वबिन्दुद्विर्भावाः ) इत्यादिलक्षणेनानुस्वारलोपे ' सम्मं ' ति वक्ष्यमाणपदसम्बन्धेनैकविधं सम्यक्त्वमित्यादि योजनीयं, ' चउह ' त्ति चतुर्धा--चतुर्भिः प्रकारैः सम्यक्त्वं भवतीति शेषः, 'पंचविह दसविहं' ति पूर्ववद्योजनीयं, तत्रैकविधं एकप्रकारमुपाधिभेदाविवक्षया निर्भेदमित्यर्थः, तद्यथा—तत्त्वार्थश्रद्धानं सम्यक्त्वमिति,उक्तं च—"त्रिकालविद्भिस्त्रिजगच्छरण्यैर्जीवादयो येऽभिहिताः पदार्थाः। श्रद्धानमेषां परया विशुद्धया, तद्दर्शनं सम्यगुदाहरन्ति ॥ १ ॥ त्रैकाल्यं द्रव्यषट्कं नवपदसहितं जीवषट्कायलेश्याः, पञ्चान्ये चास्तिकाया व्रतसमितिगतिज्ञानचारित्रभेदाः । इत्येते मोक्षमूलं त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः, प्रत्येति श्रद्दधाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः ॥ २ ॥ " एतच्चानुक्तमप्य-

वसीयत इति सूत्रकृता न विवृतं, द्विविधादि तु न ज्ञायत इत्युल्लेखमाह—' दव्वा ' इत्यादि, यथाक्रममेत्र सम्बन्धः, तेन द्विविध द्रव्यादि, त्रिविधं कारकादि, चतुर्धा पञ्चविधं चोपशमभेदैः, कृतैकशेषद्वन्द्वपदत्वाच्चास्योभयत्र सम्बन्ध इति भावनीयं, दशविधं च वाशब्दसूचितनिसर्गादिभेदैः, तत्र द्विविधं ' दव्व ' त्ति सूचामात्रत्वाद् द्रव्यतो भाव-तश्च, द्रव्यतः शुद्धमिथ्यात्वपुञ्जवर्तिनः पुद्गला एव, भावतस्तदुपष्टम्भजनितो जीवस्य तत्त्वरुचिपरिणामः, आदिशब्दः प्रकारान्तरैरपि द्विविधत्वदर्शनार्थः, तेन निश्चयव्यवहारनैसर्गिकाधिगमिकपौद्गलिकापौद्गलिकादिभेदतोऽपि द्विविधमिति, निश्चयव्यवहाररूप च—" जं मोणं तं सम्मं जं सम्मं तमिह होइ मोणं तु। निच्छयओ इयरस्स उ, सम्मं सम्मत्त-हेऊवि ॥ १ ॥ इति गाथातो भावनीय, निसर्गः—स्वभावस्तस्मादुपदेशाद्यनपेक्षं यत्सम्यक्त्वं जायते तन्नैसर्गिकम्, आधिगमिकं तु परोपदेशापेक्षं, पौद्गलिकं क्षायोपशामिकभावभावि, क्षायिकमौपशामिकं चापौद्गलिकमिति । त्रिविधं सम्यक्त्वं ' कारग ' त्ति पूर्वोक्तहेतोः कारकरोचकव्यञ्जकभेदाद्, आदिशब्दात्क्षायोपशामिकादिभेदतो वेति, उक्तञ्च " सम्मत्तंपि य तिविहं खओवसमियं तहोवसामियं च । खइयं च कारगाई पण्णत्तं वीयरागेहिं ॥ १ ॥ " चतुर्धा स-म्यक्त्वं, कैर्भेदैः ? इत्याह—' उवसमभेएहिं ' ति बहुवचनस्य गणार्थत्वादौपशामिकक्षायिकक्षायोपशामिकसास्वा-

दनभेदैः, पञ्चविधमप्येतैरेव वेदकसहितैः, पदघटनादि तु पूर्ववत्, दशविधं वाशब्दसूचितप्रज्ञापनोपाङ्गदृष्टभेदैः, तथा च तत्रोक्तम्—" निसग्गुवएसरुई आणरुई सुत्तबीयरुइमेव । अहिगमवित्थाररुई किरिया सखवधम्मरुई ॥ १ ॥" कथं द्विविधादिभेदं सम्यक्त्वमित्याह—सम्यग्—अवैपरीत्येन आगमोक्तप्रकारेण, न तु स्वमतिपरिकल्पितभेदैः, कारकादिस्वरूपं च—जं जह भणियं तं तह करेइ सइ जम्मि कारगं तं तु। रोयगसम्मत्तं पुण रुइमित्तकरं मुणेयव्वं ॥ १ ॥ सयमिह मिच्छद्दिट्ठी धम्मकहाईहि दीवइ परस्स । सम्मत्तमिणं दीवग कारणफलभावओ नेयं ॥ २ ॥ मिच्छत्तं जमुइण्णं तं खीणं अणुइयं च उवसंतं । मीसीभावपरिणयं वेइज्जंतं खओवसमं ॥ ३ ॥ उवसामगसेढिगयस्स होइ उवसामियं तु सम्मत्तं । जो वा अकयतिपुंजो अखवियमिच्छो लहइ सम्मं ॥ ४ ॥ खीणे दंसणमोहे तिविहंमिवि भवनियाणभूतम्मि । निप्पच्चवायमउलं सम्मत्तं खाइयं होई ॥ ५ ॥ उवसमसम्मत्ताओ चयओ मिच्छं अपावमाणस्स । सासायण सम्मत्तं तयंतरालंमि छावलियं ॥ ६ ॥ बावीससंतमोहस्स सुद्धदलियक्खयंमि आढत्ते । जीवस्स चरिमपोग्गलअणुहवणे वेययं होइ ॥ ७ ॥ जो जिणदिट्ठे भावे चउव्विहे सद्दहाइ सयमेव । एमेव नन्नहात्ति य निस्सग्गरुइत्ति नायव्वा ॥ ८ ॥ एए चेव उ भावे उवइट्ठे जो परेण सद्दहइ । छउमत्थेण जिणेण व उवएसरु-

इत्ति नायव्वो ॥ ९ ॥ रागो दोसो मोहो अन्नाणं जस्स अवगयं होइ । आणाए रोयंतो सो खलु आणारुई नाम ॥ १० ॥ जो सुत्तमहिज्जंतो सुएण ओगाहई उ सम्मत्तं । अंगेण बाहिरेण व सो सुत्तरुइत्ति नायव्वो ॥ ११ ॥ एगपएऽणेगाइं पयाइं जो पयरई उ सम्मत्ते । उदएव्व तेल्लबिंदू सो बीयरुइत्ति नायव्वो ॥ १२ ॥ सो होइ अभिगमरुई सुयनाणं जेण अत्थओ दिट्ठं । एक्कारस अंगाइं पइन्नगा दिट्ठिवाओ य ॥ १३ ॥ दव्वाण सव्वभावा सव्वपमाणेहि जस्स उवलद्धा । सव्वाहिं नयविहीहिं वित्थाररुई मुणेयव्वो ॥ १४ ॥ दंसणनाणचरित्ते तवविणए सच्चसमिइगुत्तीसु । जो किरियाभावरुई सो खलु किरियारुई नाम ॥ १५ ॥ अणभिग्गहियकुदिट्ठी, संखेवरुइत्ति होइ नायव्वो । अविसारओ पवयणे अणभिग्गहिओ य सेसेसुं ॥ १६ ॥ जो अत्थिकायधम्मं सुयधम्मं खलु चरित्तधम्मं च । सद्दहइ जिणाभिहियं सो धम्मरुइत्ति नायव्वो ॥ १७ ॥ इत्यादि ग्रन्थान्तरतोऽवसेयमिति गाथार्थः ॥ १३ ॥

व्याख्यातं भेदद्वारमधुना 'यथा जायत' इत्युच्यते—

काऊण गंठिभेयं सहसम्मुइयाए पाणिणो केई ।
परवागरणा अन्ने लहंति सम्मत्तवररयणं ॥ १४ ॥

' **कृत्वा** ' विधाय, कं ?—' **ग्रन्थिभेदं** ' ग्रन्थिः—कर्मजनितो घनरागद्वेषपरिणामः, यथोक्तम्—" गंठित्ति सुदुब्भेओ कक्खडघणरूढगंठि व्व । जीवस्स कम्मजणिओ घणरागद्दोसपरिणामो ॥ १ ॥ " तस्य भेदो—विदारणं ग्रन्थिभेदस्तं कृत्वा, किं ?—' **लभन्ते** ' प्राप्नुवन्ति ' **सम्यक्त्ववररत्नं** ' सम्यक्त्वमेव वरं-प्रधानं चिन्तामण्यादिरत्नापेक्षया तच्च तद्रत्नं च सम्यक्त्ववररत्नमिति तुर्यपादेन सम्बन्धः, तथा चोक्तम्—" सम्यक्त्वरत्नान्न परं हि रत्नं, सम्यक्त्वबन्धोर्न परोऽस्ति बन्धुः । सम्यक्त्वमित्रान्न परं हि मित्रं, सम्यक्त्वलाभान्न परोऽस्ति लाभः ॥ १ ॥ " के ? इत्याह—' **प्राणिनः** ' प्राणा—इन्द्रियादयः, यथोक्तम्—पञ्चेन्द्रियाणि त्रिविधं बलं च, उच्छ्वासनिःश्वासमथान्यंदायुः । प्राणा दशैते भगवद्भिरिष्टाः, " इति, ते विद्यन्ते येषां ते प्राणिनो-जीवाः, किं सर्वेऽपि ?, नेत्याह—' **केचित्** ' स्तोकाः, न सर्वेऽपि, कथं ?—' **सहसम्मुइयाइ** ' त्ति सोपस्कारत्वात्सूत्रत्वाच्च सहात्मना या सङ्गता मतिः सा सहसंमतिः, कोऽर्थः ?—परोपदेशानिरपेक्षतया जातिस्मरणप्रतिभादिरूपया, केचिदित्थं लभन्ते, अन्ये कथमित्याह—' **परव्याकरणात्** ' परोपदेशाद् ' **अन्ये** ' अपरे कृत्वा ग्रन्थिभेदं लभन्ते सम्यक्त्ववररत्नमिति पूर्वसम्बन्धः इति गाथाऽक्षरार्थः ॥ भावार्थस्तु **सप्ततिकाबृहच्चूर्णितोऽवसेयः**, स्थानाशून्यार्थं तु किञ्चिल्लिख्यते—इह कश्चिदनादिमि-

श्याद्दष्टिर्नरकगत्यादिगतिचतुष्टयान्यतरगतौ वर्तमानो ज्ञानावरणादिसप्तप्रकारकर्मराशेर्यथाप्रवृत्तकरणसंपादितान्तः-
सागरोपमकोटाकोटिस्थितिकः सञ्ज्ञिपञ्चेन्द्रियपर्याप्तो मतिश्रुतविभंगानामन्यतरसाकारोपयोगे मनोवाक्काययोग-
त्रिकान्यतरयोगे तेजःपद्मशुक्ललेश्यानां मेण विवक्षितजघन्यमध्यमोत्कृष्टपरिणामानामेकतरलेश्यापरिणामे
वर्त्तमानोऽशुभप्रकृतीनां चतुःस्थानकरसं द्विस्थानकं शुभप्रकृतीनां द्विस्थानकरसं चतुःस्थानकं कुर्वाणो
ज्ञानावरणान्तरायदशकदर्शनावरणनवकमिथ्यात्वकषायषोडशकभयजुगुप्सातैजसकार्मणवर्णादिचतुष्कागुरुलघूपघात-
निर्माणरूपाः सप्तचत्वारिंशद्ध्रुवबन्धिनीः सर्वा एव बध्नन् परावर्त्तमानास्तु संभवद्ध्रुवप्रायोग्या अविशुद्धस्यायुर्ब-
न्धाध्यवसानयोगादायुष्कवर्ज्या एव स्वीकुर्वाणः, तथाहि—यदि तिर्यङ् मनुष्यो वा प्रथमं सम्यक्त्वलाभमुपार्जयति
तदा देवगतिप्रायोग्या एव सुरद्विकवैक्रियद्विकपराघातोच्छ्वसप्रशस्तविहायोगतिपञ्चेन्द्रियजातिसातोच्चैर्गोत्रसमच-
तुरस्रत्रसादिदशकस्वभावा एकविंशतिप्रकृतीर्बध्नाति, सुरनारकौ तु मनुष्यगतिप्रायोग्या एव मनुष्यद्विकौदारिक-
द्विकप्रथमसंहनननपराघातादिद्वाविंशतिं स्वीकुरुतः, सप्तमपृथ्वीनारकास्तु 'तिर्यग्द्विकनीचैर्गोत्रसहिताः प्रागुक्तमनुष्यगति-
प्रायोग्यद्वाविंशत्यन्तर्गता एवैकोनविंशतिप्रकृतीर्बन्धन्तीति । तथा पूर्वप्रकरणानिवृत्तिकरणसञ्ज्ञकविशुद्धिविशेषाभ्यां

प्रत्येव.मन्तर्मुहूर्त्तमात्रकालमासाभ्यां विशुद्ध्यमानः स्थितिघातरसघातस्थितिबन्धगुणश्रेणीरपूर्वा ( अ ) पूर्वतराश्च प्रवर्त्तयन्नन्तरकरणमारभते, तथा चोक्तम्–" ठिइकंडगाण एवं बहुइ सहस्सा अइच्छिया जाहे । संखेज्जइमे भागे सेसे अनियट्टियध्धाए ॥ १ ॥ आढवइ अंतरं सो अंतमुहुत्तं तु हेट्ठओ धरियं । तं पढमाठिइं जाणसु आईए मिच्छदलियस्स ॥ २ ॥ अंतमुहुत्ता उवरिं किंचणमुहुत्तगेण सारिसाउ । मिच्छत्तस्स ठिईउ उक्किरइ तमंतरं भणियं ॥ ३ ॥ " तत्र प्रथमस्थितौ मिथ्यात्वदलिकवेदनादसौ मिथ्यादृष्टिः, अन्तर्मुहूर्त्तेन तु तस्यामपगतायामन्तरकरणप्रथमसमय एव निसर्गतोऽधिगमतो वौपशमिकसम्यक्त्वमाप्नोति, यस्त्वन्तरकरणं न करोति स प्रथममेव यथाप्रवृत्तादिकरणत्रयेणैव विहितत्रिपुञ्जीकरणस्तथैव क्षायोपशमिकं सम्यक्त्वं लभते, तल्लाभे च सम्यग्ज्ञानादिलाभः, उक्तञ्च–" लंभेण तस्स लभति हु आयहियं णाणदंसणचरित्तं । तं संसारसमुद्दे जीवेण अलद्धपुव्वं तु ॥ १ ॥ " इति, कृतं प्रसङ्गेन, यद्यपि चात्र सूत्रे स्वसंमतया परव्याकरणाच्च सम्यक्त्वोत्पत्तौ दृष्टान्तसूचा न कृता तथाऽप्याद्यपदे श्रेयांसो द्वितीयपदे चिलातीपुत्रो निदर्शनमवगन्तव्यं, तत्र श्रेयांसकथानकमिहैवाऽतिथिसंविभागव्रतभावनाद्वारे वक्ष्यति, चिलातीपुत्रकथा चेयम्–

नयरंमि खिइपइट्ठे जियसत्त नाम आसि नरनाहो । सयलंतेउरसारा धारणिनामा य से देवी ॥ १ ॥ सो मंतिखित्तभारो तीएँ समं विसयसोक्खदुल्ललिओ । दोगुंदगुव्व देवो गयंपि कालं न याणेइ ॥ २ ॥ तइया य तंमि नयरे निवसइ पुत्तो दियस्स एक्कस्स । चोद्दसविज्जाठाणाण पारगो जन्नदेवो त्ति ॥ ३ ॥ पंडियमाणी थद्धो सुइवाई जाइगव्विओ सो य । दट्ठूण नयरमज्झे, साहुजणं खिंसई बहुहा ॥ ४ ॥ जिणसासणस्स गिण्हइ अवण्णवायं च विविहभंगीहिं । भणइ य जणस्स पुरओ, सुइभावविवज्जिया एए ॥ ५ ॥ अह अन्नया कयाई समोसढो तत्थ बाहिरुज्जाणे । सुट्ठियनामो सूरी, तस्सीसो सुव्वओ नामो ॥ ६ ॥ गोयरचरियपविट्ठो सुणिउं धिज्जाइयस्स तं वत्तं । आगंतुं गुरुपासे आलोएउं इमं भणइ ॥ ७ ॥ जइ तुब्भे अणुजाणह तोऽहं सक्खं समग्गलोयस्स । गंतुं रायसहाएऽवणेमि पंडिच्चगव्वं से ॥ ८ ॥ तो भणइ गुरू अम्हं न जुत्तमेयं जओ इहऽम्हाणं । धम्मो खमापहाणो विरुज्झई सो विवाएणं ॥ ९ ॥ न य परिभवोऽवि एसो अक्कोसपरीसहस्स सहणाओ । न य अत्थि तत्थ सिद्धी, वायाओ जेण भणियं च ॥ १० ॥ "वादांश्च प्रतिवादांश्च, वदन्तोऽनिश्चितां-स्तथा । तत्त्वान्तं नैव गच्छन्ति, तिलपीलकवद्गतौ ॥ ११ ॥" एवं गुरुणा भणिए, सीसोऽपडिभणइ सुव्वइ

सुयंमि । सइ सामत्थे तित्थप्पभावणाऽवस्स कायव्वा ॥ १२ ॥ भणियं च–" पावयणी धम्मकही वाई नेमित्तिओ तवस्सी य । विज्जा सिद्धो य कई, अट्ठेव य पभावगा भणिया ॥ १३ ॥" एवं भणिऊण तओ नीहरिओ वंदिऊण गुरुचलणे । गुरुणाऽवि गुणं पिच्छंतएण न निवारिओ पच्छा ॥ १४ ॥ भणिओ य तेण गंतूण जण्णदेवो जहा तुमं भद्द ! । जिणसासणस्स निंदं जं विरयसि मूढजणपुरओ ॥ १५ ॥ तं किं अन्नाणाओ किं वा नाणेण गव्विओ संतो ? । जइ तावऽण्णाणाओ तो विरमसु भद्द ! एयाओ ॥ १६ ॥ जओ–" जिणसासणस्स निंदं कुणंति अन्नाण ओऽवि जे जीवा । ते हुंति दुक्खभागी भवे २ नाणगुणहीणा ॥ १७ ॥" उक्तञ्च–" ज्ञानस्य ज्ञानिनां चैव, निन्दाप्रद्वेषमत्सरैः । उपघातैश्च विघ्नैश्च, ज्ञानघ्नं कर्म बध्यते ॥१८॥" अह जाणंतो तो निवसभाएँ बहुसब्भलोयपच्चक्खं ? । कुणसु मए सह वायं किं मूढजणं पयारेसि ? ॥ १९ ॥ जो तुम्हं अम्हं वा हारिस्सइ तेण तस्स सीसेणं । होयव्वन्ति पइण्णा इय भणिए तस्स सो कुविओ ॥२०॥ भणइ य–भो भो समणाहम ! गव्वभरिय जइ वहसि वायकंडूयं । तो एज्ज पहाए निवसहाए अवणेमि जेण तयं ॥ २१ ॥ एवंति मन्निऊणं साहूवि समागओ नियवसहिं । उइयंसि दिवसनाहे उवट्ठिओ नरवइसहाए ॥ २२ ॥ पत्तो य जन्नदेवो, भणिओ समणेण भद्द ! एस अहं । तुह हिज्जोवयणेणं समागओ नर-

पमाणभूमी पभणसु जं
वइसगासं ॥ २३ ॥ इण्हिं च—राया सहाएँ सामी सब्भा एए विसिट्ठलोया य । ता इह
किंपि भणियव्वं ॥ २४ ॥ एत्थंतरंमि भणियं जन्नदेवेण—भो ! भो ! अह्मा तुब्भे, वेयाणुट्ठाणविरहियत्ताओ ।
मायंग व्व असिद्धो, न य हेऊ एस भणियव्वो ॥२५॥ तयणुट्ठाणं सव्वं सोयविहिपुरस्सरं जओ भणियं । तुब्भे य अ-
सुइभूया, मलमइलियदेहवत्थेहिं ॥२६॥ तो मुणिणा संलत्तं, लोयागमबाहिया पइण्णा ते । जम्हा जई पसत्था लोइ-
यसत्थे य गिज्जंति ॥ २७ ॥ तथा चोक्तम्—" साधूनां दर्शनं श्रेष्ठं, तीर्थभता हि साधवः । तीर्थं पुनाति कालेन,
सद्यः साधुसमागमः ॥ २८ ॥ वेदानुसारिभिरप्युक्तम्—" शुचिर्भूमिगतं तोयं, शुचिर्नारी पतिव्रता । शुचिर्धर्मपरो
राजा, ब्रह्मचारी सदा शुचिः ॥२९॥" हेऊवि ते असिद्धो जम्हा वेए विवज्जिया हिंसा । अम्हेवि तं न करिमो ता कह
वेउत्तविहिरहिया ? ॥३०॥ उक्त च वेदे—' न हिंस्यात्सर्वभूतानीति ' तयणुट्ठाणाभावो सोयाभावेण साहिओ जो य ।
सोवि अजुत्तो जम्हा सोयं खु अणेगहा भणियं ॥ ३१ ॥ तथा च वेदानुसारिणः—" सत्यं शौचं तपः शौचं, शौचमि-
न्द्रियनिग्रहः ।सर्वभूतदया शौचं, जलशौचं च पञ्चमम् ॥ ३२ ॥ " सच्चाइसेवणाओ तो कह असुइत्तणं भवे अम्ह ? ।
अह मइलदेहवत्थेहऽसुइत्तणं तंपिहु अजुत्तं ॥ ३३ ॥ जओ भणियं—" मलमइल पंकमइला धूलीमइला न ते नरा

मइला । जे पावकम्ममइला ते मइला जीवलोयंमि ॥ ३४ ॥ ” इय एवमाइवयणेहिं जाव स कओ निरुत्तरो तेणं। ताहे से सीसत्तं पडिवन्नो भावरहिओऽवि ॥ ३५ ॥ उवसंहरिऊण तओ वायं साहू समागओ वसहिं । अभिवंदिऊण सूरिं दिक्खं च दवावई तस्स ॥ ३६ ॥ पडिवन्नपालणं चिय महव्वयं होइ वीरपुरिसाणं । चिंततेणं तेणवि पडिवण्णा दव्वओ दिक्खा ॥ ३७ ॥ भणियं च-“छिज्जउ सीसं अह होउ बंधणं वयउ सव्वहा लच्छी । पडिवण्णपालणेसुं पुरिसाण जं होइ तं होउ ॥ ३८ ॥ ” अण्णया य—कत्थवि अत्थे संचोइयस्स से देवयाएँ परिणामो । भावेणवि संजाओ किंतु दुगुंछं न सो मुयइ ॥ ३९ ॥ सन्नायओऽवि सव्वे, उवसंता तस्स सावया जाया । नवरं भज्जाएँ कयं मूढाए कम्मणं तस्स ॥४०॥ दिन्नं च भत्तपाणाइदाणवेलाए कहवि पच्छण्णं । अण्णाणाओ भुत्ते तयंमि सो जाओ सवियारो ॥ ४१ ॥ तो वयलोवभयाओ गहियाणसणो मओ समाहीए । संपत्तो सुरलोयं, अपडिक्कंतो दुगुंछाए ॥ ४२ ॥ तेणं चिय वेरग्गेण सावि पडिवज्जिऊण पव्वज्जं । लज्जाएँ तमकहित्ता गुरूण कालेण कालगया ॥ ४३ ॥ पुव्वकयसुकयवसओ उववण्णा सावि देवलोयंमि । भुंजंति दिव्वलो (भो)ए दोवि तहिं देवभवजोग्गा ॥ ४४ ॥ इओ य-अत्थि इह भरहखेत्ते मगहानामेण जणवओ रम्मो । तंमि पुरं रायगिहं गिहदेउलहट्टसोहिल्लं ॥ ४५ ॥ तत्थ

धणसत्थवाहो वाहणधणधन्नसंपयाकलिओ । भद्दा यँ तस्स भज्जा दासी य चिलाइया तेसिं ॥४६॥ अण्णया य—सो
जण्णदेवदेवा तत्तो चविऊण आउयखयंमि । चेडीएँ तीएँ पुत्तो दुगुंछदोसेण संजाओ ॥ ४७ ॥ कयवयदियहेहिं तओ
चिलाइपुत्तोत्ति से कयं नामं। संवड्ढिओ कमेणं इओ य भज्जावि से चविउं ॥ ४८ ॥ । पंचण्ह सुयाणुवरिं जाया
दुहियत्तणेण भद्दाए। उचियसमयंमि अह सुंसुमत्ति तीसे कयं नामं ॥ ४९ ॥ जुम्मं पच्छा बालग्गाहो चिलाइपुत्तो
पिऊहि आणत्तो । दिल्लिं दिलियाएविहु तीएँ समं कुणइ सोऽणालिं ॥ ५० ॥ अह अण्णया य दिट्ठो, पिउणा से
नीणिओ य गेहाओ। भमडंतो य कमेणं संपत्तो सीहगुहपल्लिं ॥ ५१ ॥ पल्लिवइसीहनायं समल्लिऊणं ठिओ य
सो चंडो । कूरो दढप्पहारी, निर्त्तिसो सव्वकम्मेसु ॥ ५२ ॥ तव्विहगुणेहि पल्लीवइस्स कालेण बहुमओ जाओ ।
होइच्चिय अहव इमं, सरिसा सरिसेसु रज्जंति ॥ ५३ ॥ उक्तञ्च—" मृगा मृगैः सङ्गमनुव्रजन्ति, गावश्च गोभि-
स्तुरगास्तुरङ्गैः । मूर्खाश्च मूर्खैः सुधियः सुधीभिः, समानशीलव्यसनेषु सख्यम् ॥ ५४ ॥ " वच्चंतेसु दिणेसुं पल्लि-
वई अण्णया मओ तत्थ । नियविक्कमेण सो चेव चोरसेणावई जाओ ॥ ५५ ॥ इओ य-आऊरियलायण्णा नीसेस
कलाकलावसंपुण्णा । सा सुंसुमाऽवि जाया रूवाइगुणेहि विक्खाया ॥ ५६ ॥ सिट्ठा य तस्स पुरओ, रायगिहागं

तुएण केणावि । तप्पडिबंधेण इमो चोरे सद्दाविउं भणइ ॥ ५७ ॥ भो भो रायगिहंमी गच्छामो तत्थ धणवई पयडो । अत्थि धणसत्थवाहो तस्स सुया सुंसुमा नाम॥ ५८ ॥ सा मह भज्जा होही, तुम्हाण धणं बहुप्पयारं च । एवं पलोभिया ते अब्भुवगंतूण संचलिया ॥५९॥ पत्ता रायगिहंमी रयणीए धणागिहे पविट्ठा य । अवसेवणीएँ सोवित्तु गिह-जणे हरियगिहसारा ॥ ६० ॥ नीहरिया गेहाओ पल्लीवइणा य सुंसुमा गहिया । नाऊण धणो तत्र इयरं च आरक्खिए भणइ ॥ ६१ ॥ चोरेहिं जं विलुत्तं तं दव्वं सव्वमेव तुम्हाणं । गंतूण नियत्तावह मह दुहियं सुंसुमं एक्कं ॥ ६२ ॥ तो ते एवं भणिया, लग्गा चोराण मग्गओ सहसा । सोऽवि धणो सह पुत्तेहि निग्गओ तयणु-मग्गेणं ॥ ६३ ॥ एत्थंतरंमि य—धणसत्थवाहदुक्खं, सुयाएँ विरहंमि दारुणं नाउं । चोराण दंसणत्थंत्र उग्गओ दिणयरो झत्ति ॥ ६४ ॥ वच्चंतेहि य दूरं सव्वेऽवि य पक्कणा गहियदव्वा । सह सुंसुमाएँ दिट्ठो, चिलाइपुत्तोऽवि दूरयरो ॥ ६५ ॥ सन्नद्धबद्धकवएहिं तेहिं संपाविऊण तं सिण्णं। हयविहयं काऊणं सव्वं उद्दालियं दव्वं ॥ ६६ ॥ तं वुत्तंतं दट्ठुं अग्गे काऊण सुंसुमं चलिओ । आयड्ढियकरवालो चिलाइपुत्तोऽवि तुरियपतो ॥ ६७ ॥ एत्थंतरंमि आरक्खिएहिं भणिओ धणो जहा अम्हे । भुक्खियतिसिया संता दूरं च विमुक्कनियदेसा ॥ ६८ ॥ विसमा य इमा

अडवी एसोऽवि करालखग्गदुप्पेच्छो ! तो किं इमीएँ एक्काएँ कारणे संसए पडिमो ॥ ६९ ॥ नीतावप्युक्तम्—
" त्यजेदेकं कुलस्यार्थे, ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे, आत्मार्थे पृथिवीं त्यजेत् ॥ ७० ॥ " वुत्तं
धणेण भो ! भो ! जइ एवं तो पयाह नियगेहं । अहयं पुण नियदुहियं घेत्तूणं आगमिस्सामि ॥ ७१ ॥ एवं
भणिऊण धणो, पुत्तेहि समं पयट्टिओ गंतुं । इयरेऽवि हु वाहुडिया, गहिउं रित्थं समत्थंपि ॥ ७२ ॥ वच्चंतो जाव
इमो नियडीहूओ चिलाइपुत्तस्स । ताव इमोऽविह तीसे सीसं खग्गेण गहिऊणं ॥ ७३ ॥ मा होउ मज्झ एसा मा
वा एयाण चिंतयंतो य । वच्चइ तहेव पुरओ तेऽवि हु पेच्छंति तं देहं ॥७४॥ सोयापूरिग्गहियया पियपुत्ता सीसविरहियं
देहं । गाहिऊण पडिनियत्ता तिसाबुभुक्खाहि परितंता ॥ ७५ ॥ तरुछायाएँ निविट्ठा, भणिया पिउणा य वच्छ !
तुज्झेऽत्थ । गाढं छुहाभिभूया सक्कह न पयंपि गंतूणं ॥ ७६ ॥ ता एण्हिं-एक्कं जराएँ गहियं, अन्नं धूयाए मरण-
दुक्खत्तं । मं मारिऊण भक्खह तो सुहिया जाह नियगेहं ॥ ७७ ॥ पुत्तेहिं भणियं-हा हा अजुत्तमयं ताय ! तए
अम्ह साहियं वयणं । एवं काउं अम्हे कस्स मुहं दंसइस्सामो ? ॥ ७८ ॥ एमेव जेट्ठपुत्तेण भासियं तंपि वारियं तेहिं । एवं
कमेण सव्वेहिं भासिए तो पिया भणइ ॥ ७९ ॥ जइ एवं तो पच्छा एयं चिय मयकलेवरं खाह । भइणीएँ विगय-

रागा मुणिव्व वणपिंडिमिच्छंता ॥ ८० ॥ तो भक्खिऊण तं ते पत्ता गेहं चिलाइपुत्तोऽवि । तह वच्चंतो पासइ झाण-गयं मुणिवरं एक्कं ॥८१॥ तं भणइ अहो समणा !, संखेवेणं कहेसु मे धम्मं। अन्नह तुज्झवि सीसं छिन्दिस्सामी अह-मिमंव ॥८२॥ पडिबुज्झिहिन्ति उवओगपुव्वयं जाणिऊण मुणिणावि । उवसमविवेगसंवर पयत्तयं साहियं तस्स ॥ ८३॥ तं सोऊणुवसंतो गंतूण विवित्तभूमिभायंमि । सो चिंतिउं पयट्टो एयाण पयाण को अत्थो ? ॥ ८४ ॥ हुं नायमुव-समो ताव एत्थ कोहस्स जो परिच्चाओ। उइयस्स विहलकरणेण अणुइयस्सोदयनिरोह॥॥८५॥जओ—"दुग्गइगमणे सउणो सिवसग्गपहेसु किण्हसप्पोव्व । अत्तपरोभयसंतावदायगो दारुणो कोहो ॥८६॥" जावज्जीवं इण्हि होउ निवित्ती इमस्स ता मज्झ । इय चिंतिऊण मुक्कं करवालं दाहिणकराओ ॥९०॥ जोऽवि विवेओ मुणिणा, बीयट्ठाणंमि मज्झ आइट्ठो। तस्सवि भावत्थो दव्वसयणवत्थाइपरिहारो॥८८॥ जओ—"जत्तियमेत्ते जीवो संजोगे चित्तवल्लहे कुणइ। तत्तियमेत्ते सो सोयकीलए नियमणे निहइ ॥ ८९ ॥" एएऽवि परिच्चत्ता जावज्जीवाएँ ता मए इण्हि । इय चिंतिऊण सीसंपि छड्डियं चत्तमोहेणं ॥ ९० ॥ इंदियनोइंदियपसरभंजणे संवरोऽवि किर होइ। सोऽवि मए पडिवन्नो विमुक्कदेहेण एत्ताहे ॥ ९१ ॥ काउ-स्सग्गेण ठिओ एवं परिचिंतिऊण स महप्पा । मुणिवइउवएसायत्तसत्तहियसारसंमत्तो ॥ ९२ ॥ एत्थंतरंमि—सोणिय-

गंधागयकीडियाहिं वज्जग्गधारतुंडाहिं । सो भक्खिउमारद्धो 'पायतलारब्भ जाव सिरं ॥ ९३ ॥ तहवि न चालओ झाणाओ किंपि जाओ य चालिणीसरिसो । अड्ढाहियदियहेहिं मओ य पत्तो य सुरलोयं ॥ ९४ ॥ भणियं च– " जो तिहिं पएहिं धम्मं समभिगओ संजमं समारूढो । उवसमविवेगसंवर चिलाइपुत्तं नमंसामि ॥ ९५ ॥ अहिसरिया पाएहिं सोणियगधेण जस्स कीडीओ । खायंति उत्तमंगं, तं दुक्करकारगं वंदे ॥ ९६ ॥ धीरो चिलाइपुत्तो जो मुइंगलियाहि चालणिव्व कओ । सो तहवि खज्जमाणो पडिवन्नो उत्तमं अत्थं ॥ ९७ ॥ अड्ढाइज्जेहि राइंदिएहिं पत्तं चिलाइपुत्तेणं । देविंदामरभवणं अच्छरगुणसंकुलं रम्मं ॥ ९८ ॥ " एवं संखेवेणं चरियं कहियं चिलाइपुत्तस्स। वित्थरओ विवरणाओ नेयं उवएसमालाए ॥ ९९ ॥ श्रुतदेव्याः प्रसादेन, सम्यक्त्वं जायते यथा । इत्येतत्कथितं तस्य, दोषद्वारमथोच्यते ॥ १०० ॥–

सम्मत्तपरिब्भट्ठो जीवो दुक्खाण भायणं होइ ।
नंदमणियारसेट्ठी दिट्ठंतो एत्थ वत्थुम्मि ॥ १५ ॥

' सम्यक्त्वात् ' अर्हच्छासनश्रद्धानलक्षणात ' परिभ्रष्टः ' च्युतः सम्यक्त्वपरिभ्रष्टः, स तथाविधो ' जीवः '

प्राणी ' दुःखानां ' शारीरमानसानामसातोदयरूपाणां, कुगतिगामितयेति शेषः, ' भाजनं ' पात्रं ' भवति ' जायते, ननु प्रतिज्ञामात्रमेतद्, दृष्टान्तः क ? इत्याशङ्कायामाह--नन्दमणिकारश्रेष्ठी ' दृष्टान्तो ' निदर्शनं ' अत्र ' वस्तुनि--सम्यक्त्वपरिभ्रंशाज्जीवस्य दुःखभाजनभवनलक्षणे, इति गाथाऽक्षरार्थः ॥ भावार्थस्तु कथानकादवसेयः, तच्चेदम्--

पुरा राजगृहपत्तने श्रेणिकराजकाले धनधान्यकनकरजतद्विपदचतुष्पदादिसम्पदुपेतो नन्दमणिकारो गृहपतिरासीत्, तत्र च तदा श्रीमन्महावीरस्वामी समवसृतः, कौतुकादिना च नन्दमणिकारस्तत्समीपं गतः, भगवता च प्रारब्धा धर्मदेशना, प्ररूपितो नारकतिर्यङ्नरामरभवेषु दुःखगहनः संसारः, व्याख्याता निःशरणता प्राणिगणस्य, दर्शितः साधुश्रावकभेदेन द्विविधः संसारसागरोत्तरणहेतुर्धर्मः, तं च समाकर्ण्य प्रतिबुद्धा अनेके प्राणिनः, सोऽपि नन्दोऽत्रान्तरेऽभ्युत्थाय भगवन्तमभिवन्द्य च श्रावकत्वं प्रपेदे । अन्यदा च त्रैलोक्यबान्धवे भगवति सिन्धुविषयमुदायनराजश्रावकस्य प्रव्राजनार्थं गतवति नन्दमणिकारश्रावको ग्रीष्मचतुर्दश्यां पौषधिको बभूव, अस्तंगते रवौ विहितः सायंतनावश्यकविधिः, धर्मध्यानरतस्य चास्य

कस्याञ्चिद्वेलायां पिपासावेदना प्रादुरभूत्, ततस्तया बाध्यमानश्चिन्तयामास-न किञ्चिदुदकं विना जन्तूनां, यतो जलमन्तरेण गाढतृड्वेदनादोदूयमानमानसा म्रियन्त एव प्राणिनः, अत एव लोका वापीकूपतडागादीन् जलाशयान् कारयन्ति, अतोऽहमपि यदि रजन्यां प्राणत्यागं न करिष्ये तदा कमपि जलाशयं कारयिष्ये, एवं च मिथ्यात्वोदयप्रतिपातितसम्यक्त्वरत्नस्यानुचिन्तयतः कथमपि विभाता रात्रिः, प्रभातसमये च तथैव प्रतिपतितभावस्तथाविधविशिष्टप्राभृतकहस्तो गतो राजकुलं, दृष्टो राजा, ढौकनीयार्पणपूर्वकं च याचितो जलाशयनिमित्तं भूमिखण्डं, दत्तं राज्ञा, कारयितुमारब्धस्तत्र वापी, कालेन निष्पन्ना सा, तस्याः कारितानि चत्वारि द्वाराणि, चतुर्ष्वपि द्वारेषु कारिताः सहकाराद्यारामाः, तदासन्न एव विधापितो वैदेशिकयोग्यः प्रतिश्रयः, प्रवर्त्तिता दानशाला, एवं च प्रभूतद्रविणजातं व्ययित्वा तत्रैवातिमूर्च्छितः कदाचिदनुपक्रमणीयव्याधिविद्रवपुरार्त्तध्यानोपगतो मृत्वा तस्यामेव वाप्यां गर्भजशालूरत्वेनोदपादि, लोकाश्च तत्र विश्रामादिनिमित्तमायाताः प्रतिपादयन्ति-यथा धन्यः स नन्दमणिकारो येनेयमेवंविधारण्यभूमिरिव विविधकमलोपशोभिता सीतेव सन्निहितसदारामा नवयौवनसुभगाङ्गनेव विशिष्टनरानन्ददायिनी वापी समुत्पादिता, इत्यादि श्लाघादिकं च लोकैर्विधीयमानमाकर्ण्य

तस्यान्यदा नन्दजीवस्य कचिदेवंविधं श्रुतपूर्वं वचनमितीहापोहादि कुर्वतो जातिस्मरणमभूत्, ज्ञातवांश्च पूर्वभवप्रतिपन्नदेशविरतिभङ्गवृत्तान्तं, तत्कृतं च कुयोनिपातं, गतो विषादं, ततश्च सैव देशविरतिः स्वीकृता, इतश्च प्रभृति प्रासुकजलं मे पानं शुष्कशेवालादिराहारः, एवं प्रतिपन्नव्रतस्यास्य व्यतिक्रान्तः कियानपि कालः, अन्यदा तत्रैव ग्रामनगरादिषु विहरन् पुनः समवसृतस्तत्र वर्द्धमानस्वामी, जातो लोकप्रवादः, जलाद्यानयनायातश्राविकासंलापश्रवणतस्तस्यापि शालूरस्य जाता भगवद्दर्शनवन्दनादीच्छा, निर्गतस्ततः, शुभाध्यवसायो गन्तुमारब्धः, अन्तराले च तुरङ्गखरखुरचूर्णितदेहो व्रताद्युच्चारयित्वा स्वयमेव परिहृत्याष्टादश पापस्थानानि मृतो देवलोकमुत्पन्न इति कथासङ्क्षेपः, विस्तरस्तु ज्ञाताधर्मकथातोऽवसेयः। उक्तं चतुर्थं दोषद्वारं सम्यक्त्वस्य, अधुना गुणद्वारं पञ्चममाह—

सम्मत्तस्स गुणोऽयं अचिंतचिंतामणिस्स जं लहइ।
सिवसग्गमणुयसुहसंगयाणि धणसत्थवाहोव्व ॥ १६ ॥

'सम्यक्त्वस्य' उक्तरूपस्य 'गुणः' लाभः 'अयं' एषः अचिन्त्यमाहात्म्यः चिन्तामणिरचिन्त्यचिन्तामणिरिति शाकपार्थिवादिदर्शनान्मध्यपदलोपी समासस्तस्येति, अचिन्त्यमाहात्म्यता चाचिन्तितमोक्षादिफल-

प्रापकत्वात्, चिन्तामण्युपमानं च विशिष्टभावरत्नत्वादस्येति भावनीयं, यतः किं ?—यत् ' लभते ' प्राप्नोति सम्य-
क्त्वपरिणतो जीव इति शेषः, किमित्याह—शिवश्च—मोक्षः स्वर्गश्च—नाकः मनुजाश्च—मनुष्याः शिवस्वर्गमनुजास्तेषां
सुखानि—शर्माणि तैः संगतानि—सङ्गमाः शिवस्वर्गमनुजसुखसङ्गतानि, तानि यल्लभते जीवः एष सम्यक्त्वगुण
इति भावार्थः, क इव ? —' धनसार्थवाह इव ' प्रथमतीर्थंकरजीव इवेति गाथाऽक्षरार्थः ॥ भावार्थस्तु कथानक-
गम्यः, तच्चेदम्—

अस्मिन् जम्बूद्वीपे, द्वीपे पश्चिमविदेहसत्क्षेत्रे । अस्ति क्षितिप्रतिष्ठितनगरं सुरनगरसमविभवम् ॥ १ ॥ स वस-
पालयति तत्तदानीं, प्रसन्नचन्द्रे नरेश्वरे नीत्या । तत्र धनसार्थवाहो बभूव निजविभवजितधनदः ॥ २ ॥ यथा—भो
न्तपुरं चलितः कदाऽपि तद्योग्यभाण्डमादाय । जनबोधनाय पटहेन घोषणां कारयामास ॥ ३ ॥ ४ ॥
भो लोकाः ! सम्प्रति धनोऽमुतः प्रस्थितो वसन्तपुरम् । तद् यस्य तत्र गमने वाञ्छाऽस्ति स तेन सममेतु ॥ ४ ॥
पथ्यदनभाण्डमूल्यप्रवहणवस्त्रादि यस्य यन्नास्ति । तस्य स एव विधास्यति, तेनाक्षूणं समस्तेन ॥ ५ ॥ श्रुत्वा
घोषणमेवं तस्य ततो विविधकार्यकृतचित्ताः । चेलुः सेवककृपणव्यवहारकप्रभृतयोऽनेके ॥ ६ ॥ अत्रान्तरे—श्रीधर्म-

घोषसूरिः, कुतोऽपि तद्घोषणां समाकर्ण्य । प्रेषयति स्म मुनियुगं, समीपमथ माणिभद्रस्य॥ ७॥ सर्वाधिकारचिन्तन-
परायणस्य खलु सार्थवाहस्य । तस्य सकाशे प्रहितं यतियुगलं सूरिणा तेन ॥ ८ ॥ युग्मम् । निजगृहसमागतं तत्
साधुयुगं वीक्ष्य माणिभद्रोऽथ । अभिवन्द्य विनयसारं, पप्रच्छागमनहेतुमसौ ॥ ९ ॥ साधुभ्यामुक्तम्—भो ! धर्मघोषसूरि-
भिरावां प्रहितौ समागतावत्र । धनसार्थपतेः श्रुत्वा, वसन्तपुरसंमुखं गमनम् ॥ १० ॥ तेन समं जिगमिषवोऽ-
स्मत्पूज्या यदि च स बहुमतिं कुरुते । इत्युक्तः सोऽवादीदनुग्रहः सार्थवाहस्य ॥ ११ ॥ किन्तु—स्वयमेव गमन-
समये सूरिभिरागत्य सार्थवाहोऽपि । भणनीय इति गदित्वा नत्वा तौ प्रेषयामास ॥ १२ ॥ गत्वा तपस्वियुग्मेन
तेन सर्वं निवेदितं सूरेः । तेनाथ तदनुमन्य स्वधर्मनिरतेन संतस्थे ॥ १३ ॥ अन्यस्मिन्नहनि ततः
प्रशस्ततिथिकरणयोगनक्षत्रे । प्रस्थानमेष चक्रे नगरादविदूरभूभागे ॥ १४ ॥ तत्रस्थस्यायाता
आचार्यास्तस्य दर्शननिमित्तम् । बहुमुनिजनपरिवारा, दृष्टा धनसार्थवाहेन ॥ १५ ॥ उत्थायासनदाना-
द्युचितप्रातिपत्तिपूर्वमभिवन्द्य । किं यूयमपि समेष्यथ मया समं पृष्टवानेवम् ॥ १६ ॥ अनुमन्यते यदि भवानित्येवं
सूरयोऽपि तं बभणुः । आहूय सूपकारं तदनन्तरमुक्तवानेषः ॥ १७ ॥ भो भद्र ! यद् यदा वाऽमीषामशनादि कल्पते

किञ्चित् । मुनिपुङ्गवेभ्य एभ्यः तत्सर्वं देयमविकल्पम् ॥ १८ ॥ एवं श्रुत्वाऽऽचार्येण पुनरप्युक्तं यथा न सार्थपते ! ।
आहारादिकमित्थं विचिन्तितं कल्पतेऽस्माकम् ॥ १९ ॥ यन्न कृतं नानुमतं न कारितं किन्त्वचिन्तितं गृहिणा ।
आत्मार्थमेव रचितं प्रायोग्यं तद् यतो व्रतिनाम् ॥ २० ॥ अत्रान्तरे धनस्य प्राभृतिकं कश्चिदर्पयामास । परिपक्वसुर-
भिसहकारसत्फलैः स्थालमापूर्णम् ॥ २१ ॥ तद्वीक्ष्य सार्थपतिना हृष्टेनोचे यथाऽनुगृह्णीत । भगवन्तः ! संप्रति मामुचि-
तफलग्रहणतो यूयम् ॥ २२ ॥ आचार्यैरुक्तम्—सम्प्रत्येव निवेदितमेवं भवतो यथा गृहस्थैर्यत् । आहारादि कृतं स्यात्
स्वार्थं तत्कल्पतेऽस्माकम् ॥ २३ ॥ कन्दफलमूलकादि तु शस्त्रोपहतं न यत्तदस्माकम् । स्प्रष्टुमपि नोचितं स्यात् किं पुनरिह
खादितुं ? भद्र ! ॥ २४ ॥ तच्छ्रुत्वा तेन ततो, भणितमहो ! दुष्करं व्रतं भवताम् । शाश्वतसौख्यो मोक्षः सुखेन न प्राप्यते यद्वा
॥ २५ ॥ एवं यद्यपि भवतामस्माभिः स्तोकमेव किल कार्यम् । पथि गच्छतां तथाऽपि स्यादपि तदवश्यमादेश्यम् ॥ २६ ॥
इत्युक्त्वा प्रणिपत्य प्रशस्य च प्राहिणोदसौ सूरीन् । तेऽप्युक्तधर्मलाभाः स्थण्डिलभुवमागताः शुद्धम् ॥ २७ ॥
स्वाध्यायध्यानपरास्तत्र स्थित्वा विभावरीं सकलाम् । याताः प्रभातसमये [ ग्रं. १५०० ] साकं धनसार्थवाहेन ॥ २८ ॥
तदा च—तापयति महीपृष्ठं शोषयति जलाशयांस्तृषं तनुते । नाशयति सरसभावान्निदाघसमयो गतो वृद्धिम् ॥ २९ ॥

एवंविधे च काले गच्छन् सततप्रयाणकैः सार्थः । त्रिविधश्वापदभीमां प्राप्तो विषमाटवीमेकाम् ॥ ३० ॥ सर्जार्जुन-सरलतमालतालहिंतालसल्लकैर्वृक्षैः । अवरुद्धकरप्रसरः सूरोऽपि न लक्ष्यते यत्र ॥ ३१ ॥ अत्रान्तरे—ग्रीष्मेण धरावलयं समस्तमुत्तापितं विलोक्यैव । तस्याश्वासनहेतोः पयोदसमयः समायातः ॥ ३२ ॥ ततः—तडिदुज्वलप्रतापो ग्रीष्मं गुरुगर्जितेन तर्जयति । धारासारप्रहरणविभीषणो वीर इव जलदः ॥ ३३ ॥ एवंविधे च समये विज्ञाय धनोऽतिमार्गदुर्गमताम् । आपृच्छ्य सार्थिकजनं तत्रैवावस्थितिं चक्रे ॥ ३४ ॥ भाण्डादिविनाशभयाद्विधाय किञ्चिच्च गुणलयनिकादि । तस्थुः सार्थिकलोकाः वर्षानिर्वाहणनिमित्तम् ॥ ३५ ॥ तदा च—सार्थस्य बहुजनत्वात् पथस्य बहुदिवसलङ्घनीयत्वात् । अभ्यधिकदानभावाद्धनस्य सार्थे समस्तेऽपि ॥ ३६ ॥ पाथेयादि क्षीणं पश्चात्तापं गतश्च तल्लोकः । लग्नश्च कन्दफलमूलभक्षणे पीडितः क्षुधया ॥ ३७ ॥ ततः—कथितं धनस्य रात्रौ पल्यङ्कगतस्य माणिभद्रेण । नाथ ! यथा संपन्नः सार्थजनः क्षीणपथ्यदनः ॥ ३८ ॥ कन्दफलमूलकाशी, तापसवृत्तिं समाश्रित इदानीम्। लज्जां विमुच्य परिहृत्य पौरुषं मुक्तमर्यादः ॥ ३९ ॥ यतः—मानं मुञ्चति गौरवं परिहरत्यायाति दैन्यात्मतां, लज्जामुत्सृजति श्रयत्यकरुणां नीचत्वमालम्बते । भार्याबन्धुसुहृत्सुतेष्वपकृतीर्नानाविधाश्चेष्टते, किं किं यन्न करोति निन्दित-

मपि प्राणी क्षुधापीडितः ? ॥ ४० ॥" एतच्चाकर्ण्य धनः क्षणमात्रं चिन्तया समाक्रान्तः । तामीर्ष्ययेव निद्रा,
नुनोद तदनन्तरं तस्य ॥ ४१ ॥ अत्रान्तरे रजन्याः, पश्चिमयामेऽश्वमन्दुरापालः । आर्यामेकामपठद्धनसार्थपतिं
समुद्दिश्य ॥ ४२ ॥ 'पालयति प्रतिपन्नान् विषमदशामागतोऽपि सन्नाथः । खण्डीभूतोऽपि शशी कुमुदानि विकाशय-
त्यथवा ॥ ४३ ॥' श्रुत्वैतां सार्थपतिः विमुच्य निद्रां विचिन्तयामास । स्तवनच्छलेन नन्वहमनेन संप्रत्युपालब्धः
॥ ४४ ॥ तत्कोऽत्र सार्थमध्ये, गाढं दुःखार्दितोऽस्ति ? चिन्तयतः । सूरिप्रमुखा मुनयः, सहसा तस्यागताश्चित्तम्
॥ ४५ ॥ हा हा नैतावन्तं, कालं तेषां मया महाव्रतिनाम् । नामापि सङ्गृहीतं, प्रतिजागरणादि दूरेऽस्तु ॥ ४६ ॥
कन्दफलादि तु तेषामभक्ष्यमिह तेन ते महामुनयः । अत्यन्तदुःखभाजो मच्चेतस्तर्कयत्येवम् ॥ ४७ ॥ अहह !
प्रमादमदिरादारुणता यत्सदा कुचिन्तासु । प्रेरयति जनं सद्विषयबुद्धिचैतन्यमपहरति ॥ ४८ ॥ तदिदानीमपि
गत्वा प्रतिजागरणं करोम्युषसि तेषाम् । चिन्तयतस्तस्यैवं पठितार्या यामपालेन ॥ ४९ ॥ 'संसारेऽत्र मनुष्यो घटन
केनापि तेन सह लभते । दैवस्यानभिलषतोऽपि यद्वशात्पतति सुखराशौ ॥ ५० ॥' एतां च पठ्यमानामाकर्ण्य धनोऽपि
चेतसा तुष्टः । मुनिसङ्गमोऽनया मे सुखावहः सूचितो यस्मात् ॥ ५१ ॥ अत्रावसरे पठितं कालनिवेदकेन—'भूषित-

भुवनाभोगो दोषान्तकरः समुत्थितो भानुः । दर्शयितुमिव तवायं समगुणभावेन मित्रत्वम् ॥ ५२ ॥' उत्थाय ततः कृत्वा प्रभातकृत्यानि सार्थवाहोऽपि । अगमत् सूरिसमीपं बहुभिः परिवारितो लोकैः ॥ ५३ ॥ तत्र च गतेन तेन—कारुण्यस्य निवासो धृतेर्निधानं निकेतनं नीतेः । वेश्म चतुर्विधबुद्धेराधारः साधुधर्मस्य ॥ ५४ ॥ सन्तोषामृतजलधिः क्रोधोद्धतदहनसजलजलवाहः । श्रीधर्मघोषसूरिर्मुनिभिः परिवारितो दृष्टः ॥ ५५ ॥ अभिवन्दितश्च भक्त्या सह मुनिभिरसौ प्रहृष्टचित्तेन । सार्थप्रभुणाऽऽत्मानं कृतार्थमभिमन्यमानेन ॥ ५६ ॥ गुरुणाऽभिनन्दितोऽसौ सादरमथ धर्मलाभवचनेन । भवमूलकर्मकुलशैलदलनवज्रानलेनोच्चैः ॥ ५७ ॥ उपविश्य ततोऽवादीद्धनो यथा नाथ ! पुण्यरहितस्य । रोहति न कल्पवृक्षो गृहे न वा पतति वसुधारा ॥ ५८ ॥ यतः—संसारजलधिपोतं समतृणमणिलेष्टुकनकरिपुसुहृदम् । संप्राप्यापि भवन्तं सद्धर्मनिवेदकं सुगुरुम् ॥ ५९ ॥ न श्रुतममृतसमानं वचनं न कृता जगत्प्रशस्या च । तव चरणकमलसेवा विहिता च न ते क्वचिच्चिन्ता ॥ ६० ॥ युग्मम् । तदिदं प्रमादकरणं सहनीयं नाथ ! मामकं भवता । एतद्वचनावसितौ सूरिस्तमवोचदुचितज्ञः ॥ ६१ ॥ यथा—सार्थपते ! सन्तापं मा गास्त्वं येन सर्वमेवेह । कृतमस्माकं भवता पालयता क्रूरसत्त्वेभ्यः ॥ ६२ ॥ आहारादि यथासंभवं च देशादियोग्यतासदृशम् । त्वत्सार्थिकलोकेभ्यः सर्वं

संपद्यतेऽस्माकम् ॥ ६३ ॥ ततो धनेनोक्तम्—संस्थापना वचोभिः किममीभिर्नाथ ! बहुभिरप्युक्तैः ?। लज्जे स्म सर्वथाऽहं प्रमादचरितेन खल्वमुना ॥ ६४ ॥ तस्मादनुग्रहं मे विधाय संप्रेषयस्व मुनियुग्मम् । तत्प्रायोग्यं किञ्चिद् येनाहं संप्रयच्छामि ॥ ६५ ॥ अप्रतिपात्यं भावं गुरुरपि विज्ञाय तस्य तमुवाच । एवं क्रियते सुन्दर ! किन्तु यतीनां यदिह कल्प्यम् ॥ ६६ ॥ तज्जानात्येव भवान् सोऽपि प्रतिवक्ति नाथ ! जानामि । यदनुचितं साधूनां तन्नैव विभो ! प्रदास्यामि ॥ ६७ ॥ तदनन्तरमाचार्यैस्तपस्विसङ्घाटकः समादिष्टः । गमनार्थं तत्र धनोऽप्यभिवन्द्य गतो निजावासम् ॥ ६८ ॥ क्षणमात्रेणायातं निजानुमार्गेण वीक्ष्य मुनियुग्मम् । अवलोकयति स्म धनस्तदा च तद्योग्यमशनादि ॥ ६९ ॥ भवितव्यतानियोगाद् न यावदन्यन्निरीक्षितं किञ्चित् । स्त्यानमुपादाय घृतं यतिपुरस्तावदुपतस्थौ ॥ ७० ॥ उक्तवांश्च—यदि कल्पनीयमेतत्तदाऽनुगृह्णीत कुरुत मत्तोषम् । कल्पत इत्युक्त्वा तैर्मुनिभिरुपस्थापितं पात्रम् ॥ ७१ ॥ ततश्च—परिवर्द्धमानशुभकण्डकेन तद्भावसारचित्तेन । निजजन्मजीवितधनं कृतार्थमभिमन्यमानेन ॥ ७२ ॥ दत्तं घृतं मुनिभ्यः परमानन्दोत्थपुलकिना तावत् । परिपूर्णमिति भण द्भिर्यावत्तैः संवृतं पात्रम् ॥ ७३ ॥ अभिवन्द्य भावसारं तदनु प्रस्थापिताश्च तेनैते । प्रवितीर्णधर्मलाभा यथासमायातमुप-

जग्मुः ॥ ७४ ॥ ततश्च सार्थवाहेन—तद्भावसारदानप्रभावतो बोधिबीजमुपाचित्य । भव्यत्वपाककारणमपारभवजलधितीरापम् ॥ ७५ ॥ निर्वर्तितः सुखौघः सुरमनुजभवेषु शिवसुखसमानः । संसारमहाजलधिर्मुक्तितटी निकट मानीता ॥ ७६ ॥ युग्मम् । तदनूत्तरोत्तरगुणक्रमेण समुपार्ज्य तीर्थकृत्त्वं च । तस्मात्त्रयोदशभवेऽनुभूय सिद्धिं च संप्राप्तः ॥ ७७ ॥ तत्त्रयोदशभवसूचिका चेयं निर्युक्तिगाथा, यथा—" धण १ मिहुण २ सुर ३ महब्बल ४ ललियंगय ५ वइरजंघ ६ मिहुणे य ७ । सोहम्म ८ विज्ज ९ अच्चुय १० चक्की ११ सव्वट्ठ १२ उसभे १३ य ॥ ७८ ॥ "
एवं च तस्य—सम्यक्त्वबीजमात्रेऽप्यवाप्यते यदि तथा फलाकलना । साक्षात्सम्यक्त्वाप्तौ तदेह तत्किं न यद्भवति ॥ ७९ ॥ तथाहि—अशमसुखनिधानं धाम संविग्नतायाः, भवसुखविमुखत्वोद्दीपने सद्विवेकः । नरनरकपशुत्वोच्छेदहेतुर्नराणां, शिवसुखतरुमूलं शुद्धसम्यक्त्वलाभः ॥ ८० ॥ उक्तञ्च—" सम्यक्त्वमेकं मनुजस्य यस्य, हृदि स्थितं मेरुरिवाप्रकम्पम् । शङ्कादिदोषापहृतं विशुद्धं, न तस्य तिर्यङ्नरके भयं स्यात् ॥ ८१ ॥ प्रस्तुतार्थोपयोग्येतत्किञ्चिदत्र निवेदितम् । वृषभाख्यानकाज्ज्ञेयः, शेषश्चरितविस्तरः ॥ ८२ ॥

व्याख्यातं सम्यक्त्वस्य पञ्चमं गुणद्वारमधुना क्रमप्राप्तं षष्ठं यतनाद्वारमुच्यते—

लोइयतित्थे उण ण्हाणदाणपेसवणपिंडहुणणाई ।
संकंतुवरागाइसु लोइयतवकरणमिच्चाई ॥ १७ ॥

'लोइयतित्थे' त्ति तीर्यतेऽनेनेति तीर्थं, तच्चेह द्रव्यतीर्थं नद्यादिसमभागरूपं, न भावतीर्थम्, अत एव लोके—जने साधु भवं वा लौकिकं तच्च तत्तीर्थं चेति तत्तथा तत्र, किमित्याह—स्नानदानप्रेषणापिण्डहवनादि, न कर्त्तव्यमिति शेषः, पुनःशब्दश्च विशेषणार्थः, तत एवं विशिनष्टि—'लौकिकतीर्थे' गङ्गाकुशावर्त्तकनकखलादिके धर्मार्थिना धर्मनिमित्तं स्नानादि न विधेयं, तत्र स्नानं—शरीरस्य शौचकरणं दानं—धिग्जातिभ्यो वितरणं प्रेषणं-अस्थ्यादेः प्रस्थापनं 'पिंड'त्ति अवयवमात्रेण समुदायस्य विवक्षितत्वात्पिण्डप्रदानं—मृतपित्रादिनिमित्तं पिण्डपातकरणं 'हुणणं' ति हवनं—वह्नौ घृतादिप्रक्षेपणं, आदिशब्दाद्विशिष्टयोगानुष्ठानतन्निवासादिग्रहः, कदा चेदं न कर्त्तव्यमित्याह—सङ्क्रान्तिश्च—उत्तरायणादि सं(उ)परागश्च—सूर्यचन्द्रमसोर्ग्रहणं तावादी येषां व्यतीपातादीनां ते तथा तेषु, अयमर्थः—लौकिकतीर्थं गत्वा सङ्क्रान्त्यादिषु स्नानादि न कर्त्तव्यं, यद्वा पृथगेव सम्बन्धः, लौकिकतीथ स्नानादि न कर्त्तव्यं, सङ्क्रान्त्यादिपु च यल्लौकिकैस्तिलदानादि क्रियते तन्न

कर्त्तव्यमिति शेषः, अयमेव चाभिप्रायो मूलवृत्तौ लक्ष्यते, 'हुणणाइ' त्ति आदिशब्देन सूतकादिग्रहणात्, तथा 'लौकिकतपःकरणं' वत्सद्वादश्यादिष्वनग्निपक्वभक्षणादि, न कर्त्तव्यमिति संबन्ध इति, आदिशब्देन च—"पडिवन्नदंसणस्स य ण वंदिउं पणमिउं च कप्पंति । अन्नाइं चेइयाइं परतित्थियदेवयाइं च ॥ १ ॥ धम्मग्गिट्ठिगवण्हिग अणाहसालातलायपत्रबंधे । पिप्पलअसंजयाणं पावारफलाइ गोदाणं ॥ २ ॥" इत्यादि यदुक्तं ग्रन्थान्तरे तदपि सर्वं गुरुलघ्वालोचने यथाऽन्येषां स्थिरीकरणप्रवृत्त्या मिथ्यात्वादिविषयं न भवति तथा पर्यालोच्य विधेयमिति सूचितम्, एवं च कुर्वता सम्यक्त्वयतनाऽऽराधिता भवतीति गाथाऽक्षरार्थः ॥ १७ ॥ व्याख्यातं यतनाद्वारं षष्ठं, सम्प्रत्यतिचारद्वारं सम्यक्त्वस्य सप्तममभिधीयते—

एत्थ य संका कंखा विइगिच्छा अन्नतित्थियपसंसा ।
परतित्थिओवसेवा य पंच दूसंति सम्मत्तं ॥ १८ ॥

'अत्रे'ति सम्यक्त्वे चकारोऽनुक्तविशेषणसमुच्चये, ततो निश्चयतः प्रतिपतिते व्यवहारतो मलिनीकृते, किं ?—शङ्का काङ्क्षा विचिकित्साऽन्यतीर्थिकप्रशंसा परतीर्थिकोपसेवा च, एताः पञ्च भवन्तीतिशेषः, जाताश्च किं

कुर्वन्ति इत्याह—' दूषयन्ति ' विकृतिं नयन्त्यपनयन्ति वा सम्यक्त्वं, तत्र शङ्का—भगवदर्हत्प्रणीतात्यन्तगह-
नधर्मास्तिकायादिपदार्थेषु मतिदौर्बल्यात्सम्यगनवधार्यमाणेषु किमेवं स्यान्नैवमिति संशयकरणं, उक्तं हि—
" संसयकरणं संका " सा तु देशसर्वभेदाद्द्विधा, देशशङ्का देशविषया, यथा किमयमात्माऽसङ्ख्येयप्रदेशोऽप्रदेशो
वेति, सर्वशङ्का समस्तास्तिकायव्रात एव किमित्थं नेत्थं वेति, काङ्क्षा अन्यान्यसुगतादिप्रणीतदर्शनाभिलाषः,
यथोक्तम्—" कंखा अन्नन्नदंसणग्गाहो " साऽपि तथैव द्विधा, देशकाङ्क्षा—एकदेशविषया, यथा शोभनं सौगतदर्शन
मेकं, अत्र चित्तजयप्रतिपादनात्, तस्य च प्रधानमुक्त्युपायत्वादिति, सर्वकाङ्क्षा तु सर्वाण्येव कपिलकणभक्षाक्षपादा-
दिमतान्यहिंसाप्रतिपादनपरत्वादिह लोके चात्यान्तिकक्लेशप्रतिपादकत्वात्सुन्दराणीत्याभिलाषः । ' विचिकित्सा '
युक्त्यागमोपपन्नेष्वर्थेषु सत्सु फलं प्रति संमोहो, यथा—किमस्य महतः सिकताकणकवलकल्पतपःक्लेशस्यायत्यां
मम फलसम्पद्भविता न वेति, उभयथा हि कृषीबलादीनां क्रियाः दृश्यन्ते—फलवत्यो निष्फलाश्चेति, उक्तञ्च—"संतंमि
विचिकिच्छा सिज्झेज्ज न मे अयं अट्ठो" न चेयं शङ्कैवेत्याशङ्कनीयं, सा हि सकलासकलपदार्थभाक्, तेन द्रव्यगुण-
विषया, इयं तु क्रियाविषयैव, अथवा ' विउगुच्छ ' त्ति विद्वज्जुगुप्सा, विद्वांसः—साधवो ज्ञातभवस्वरूपत्वेन

त्यक्तसर्वसङ्गास्तेषां जुगुप्सा—निन्दा, यथाऽस्नानतः प्रस्वेदजलोपचितबहुलमलगन्धवपुषोऽमी, को वा दोषः स्यादेतेषां यदि प्राशुकजलेनाङ्गक्षालनं कुर्युरिति । ‘ **अन्यतीर्थिकप्रशंसे** ’ ति अन्ये—परे सर्वज्ञप्रणीततीर्थवर्त्तिभ्यस्ते च ते तीर्थिकाश्च—शाक्यादयस्तेषां प्रशंसा—स्तुतिरिति विग्रहः, सा च यथा—पुण्यभाज एते शाक्यादयो दयालुत्वा-दित्यादि, उक्तञ्च—“ परपासंडपसंसा सक्काइणमिह वण्णवाओ उ ” । ‘ **परतीर्थिकोपसेवा चे** ’ ति परतीर्थिकाः—शाक्यादय एव तेषामुपसेवा—उपासना तत्पार्श्वगमनतद्वचनश्रवणतत्समीपावस्थानादिरूपा, तैः सह परिचय इति योऽर्थः, अत एव परपाषण्डसंस्तव इति संस्तवशब्देनान्यत्र परिचयो व्याख्यातः, यथोक्तम्—“ तेहिं सह परिचयो जो स संथवो होइ नायव्वो । ” सम्यक्त्वातिचारत्वं च शङ्कादीनां चित्तमालिन्यजिनाविश्वासादिहेतुत्वतो भावनीयमिति गाथार्थः ॥ १८ ॥

अत्र च सूत्रानुपात्ता अपि शङ्कादिपदेषु मूलवृत्तौ प्रपञ्चितज्ञशिष्यानुग्रहाय दृष्टान्ताः सूचिताः, ते च सुखावगमाय सविस्तरा एव लिख्यन्ते, तत्र शङ्कायां तावज्ज्ञाताधर्मकथाप्रसिद्धगृहीतमयूराण्डकसार्थवाहपुत्रक-थानकं कथ्यते—

इहैव जम्बूद्वीपे भारतक्षेत्रालङ्कारभूता चम्पा नगरी, तस्या उत्तरपूर्वस्यां दिशि सुरभिशीतलच्छायविविध-वनखण्डमण्डितं सर्वर्त्तुकप्रसवफलप्रचयकलितं सुभूमिभागाभिधानमुद्यानं, तदेकदेशवर्त्तिमालुकाकच्छनिवासिन्येका वनमयूरी बभूव, सा चान्यदा स्वकालक्रमोपचितं कललताधारमनुपहतमखण्डपाण्डुरमण्डकयुग्ममसूत, इतश्च तस्यामेव चम्पायां तदा जिनदत्तसागरदत्तपुत्रौ सहपांशुक्रीडितौ परस्परं मित्रत्वसंपन्नौ सार्थवाहसुतावभूतां, तौ च कदाचित् सुभूमिभागोद्यानमुद्यानश्रियमनुभवितुमशनपानखाद्यस्वाद्यधूपपुष्पगन्धादि समादाय गणिकया देवदत्तया परिगतौ समागतौ, तत्र च पुष्करिणीषु नानाविधभङ्गीभिर्जलक्रीडां विधाय देवदत्तया सार्द्धं कामभोगलालसौ चिरं स्थित्वा तस्यैवोद्यानस्य रम्यरम्यतरान् प्रदेशानवलोकयन्तौ तमेव मालुकाकक्षं प्रविविशतुः, ततश्च सा वनमयूरी तावालोक्य त्रस्तमानसा महतः केकारवान् कुर्वती ततो निष्क्रम्य तदनतिदूरवर्त्तिवृक्षशाखाधिरूढा सार्थवाहपुत्रौ मालुकाकक्षं चानिमेषया दृष्ट्याऽवलोकयन्ती तस्थौ, तौ तु तां वनमयूरीं तथा दृष्ट्वा परस्परं मन्त्रितवन्तौ—यथा भवितव्यमत्र केनचित्कारणेन येनागतमात्रावेवावां दृष्ट्वेयं वनशिखण्डिनी खण्डितेव महादुःखाभिभूता जाता, न चैतावतैव स्थिता, किन्तु त्रासवशविवशदृष्टिरितो

निर्गत्याऽऽवां कक्षां च निरीक्षयमाणाऽऽस्ते, तदलोकयावः कक्षान्तरं किमत्र कारणमित्यालोच्य सर्वतः कक्षान्तरं दृष्ट-वन्तौ तावद् यावदवलोकयांबभूवतुस्तदण्डकयुग्मं, गृहीत्वा च तत्तावागतौ निजवेश्म, समर्पितं च स्वस्वदासानामेकैकं तद्रक्षणार्थमनया बुद्ध्या, यथा निष्पन्नमेतन्मयूरयुग्ममावयोः क्रीडायै भविष्यति, तयोश्च सागरदत्तपुत्रः स्वगृहीतमयूराण्डके शङ्कां कृतवान् यथा किमिदं निष्पत्स्यते नवेति, शङ्कापरिगतश्च स नित्यमागत्यानेकाभिरुद्वर्त्तनादिभिस्तद्बाधिकाभिः प्रतिजागरणाभिः परिजागर्त्ति स्म, अन्तःसारपरीक्षणार्थं च तत्कर्णमूलमानीयानेकधा खलखलयति स्म, एवं च गच्छत्सु दिवसेषु तत्तथाऽननुकूलचेष्टाभिर्विशुष्कमालोक्य विषण्णः सागरदत्तपुत्रो गतश्च पश्चात्तापं, यथा—किमिदमित्थं मयोद्वर्त्तनादिभिः खेदितं ? । जिनदत्तपुत्रस्तु तत्र निःशङ्क एव नोद्वर्त्तनादि किञ्चित्कृतवान्, केवलं विधिना पालितवान्, अन्यदा च स्वकालक्रमेण निष्पन्नो मयूरपोतो दृष्टः तेन हृष्टमानसेनाकारितो मयूरपोषकः, सन्मानपुरस्सरं भणितश्च—यथाऽयं मयूरपोतो विशिष्टप्रायोग्यद्रव्यपरिपोषणाभिः शीघ्रमेव परिपुष्टो भवति नृत्तकलां च विशिष्टामभ्यस्यति तथा विधीयतां, तेनापि तद्वचनमनुमत्य गृहीतो मयूरपोतो नीतः स्वगृहं प्रारब्धः पोषयितुमनेकद्रव्योपचारैः शिक्षितश्च विविधभङ्गीभिर्लास्यलीलां तावद् यावदुन्मुक्तबालभावः परिपूर्णमानोन्मानप्रमाणो विचित्रगुरुकलाकलापोपेत

एकतालेनैवानेकप्रकारनृत्यकारी संपन्नः, दृष्ट्वा च तं तथोपात्तकलाकलापोपशोभितं कलापिनं स मयूरपोषको नीत्वा जिनदत्तपुत्रपार्श्वे समर्पितवानेनं, तेनापि तं तथाविधमालोक्य हर्षप्रकर्षोद्भिन्नरोमाञ्चकञ्चुकावच्छादितवपुषा दत्तं विपुलं तन्मनोमोददायि तस्मै पारितोषिकं, संगोपितश्च स्वमयूरः, तेन च स्थानस्थानप्रवर्त्तितापूर्वापूर्वलास्यलीलाविनोदेन हृतहृदयीकृतः समस्तश्चम्पानगरीलोको जिनदत्तसुतेनेति । शङ्काभावाभावाभ्यां दोषगुणौ परिभाव्य विषयशङ्का परिहार्येति, तथा चोक्तम्—"जिणवरभासियभावेसु भावसच्चेसु भावओ मइमं । नो कुज्जा संदेहं संदेहोऽणत्थहेउत्ति ॥ १ ॥ निस्संदेहत्तं पुण गुणहेऊ जं तहा य तं कज्जं । इत्थं दो सेट्ठिसुया अंडयगाही उयाहरणं ॥ २ ॥"

काङ्क्षायां—कुशस्थलाभिधाननगरे कुशध्वजो राजा, कुशाग्रबुद्धिस्तस्यामात्यः, अन्यदा च राज्ञः केनापि विपरीतशिक्षावश्वौ प्राभृतमानीतौ, न च कथितं यथा विपरीतशिक्षावेताविति, ततः कौतुकेन राजाऽमात्यौ तावारुह्याश्ववाहनिकायां निर्गतौ, ताभ्यामपहृत्यारण्यं प्रवेशितौ, निर्विण्णौ च नृपमन्त्रिणौ यावद्वल्गां तौ मुमुचतुस्तावत्स्थितावश्वौ, तत उत्तीर्णमात्राभ्यामेव ताभ्यामुच्छोटिते तत्पर्याणे पतितावेतौ तुरंगमौ, नरनाथमहत्तमौ च बुभुक्षापिपासापीड्यमानौ जलान्वेषणाय दिशोऽवलोकयन्तौ ददृशतुर्बलाकाः, तदनुसारप्रवृत्तौ च प्राप्तवन्तौ विमलजलापूर्णसरो-

वरं, तत्र कृतस्नानादिव्यापारौ विश्रम्य क्षणमात्रं समासन्नतरुवरेभ्यः फलान्यादाय भुक्त्वा च पत्रशय्यायां सुप्तौ, द्वितीयदिने च ततः स्थानादुत्थितौ स्वनगराभिमुखं व्रजन्तौ प्राप्तौ तुरगपदानुसारसमागतसैनिकलोकैः नीतौ कियद्भिरपि दिवसैः स्वनगरम् । ततो राज्ञा क्षुधा बाध्यमानेन कारयित्वा सर्वमाहारजातं प्रेक्षणकदृष्टान्तेन मनसिकृतेन भुक्तमाकण्ठं, तेन चोत्पादिता महती पिपासा जनितोऽन्तर्दाहः कृता शूलव्यथा, ततः समासन्नलोकेन तदुपशमनाय विधीयमानेऽप्यग्निखेदादौ निरुपक्रमणीयसंचटितदोषैः क्षपितमस्यायुः, अभाजनीबभूवैहलौकिकसुखानामेष आकाङ्क्षादोषेण, अमात्यस्तु वमनविरेकादिकरणरूपां सद्वैद्योपदेशेन विधाय कायशुद्धिं तत्कालानुरूपलब्धाहारादिक्रमेणोपबृंह्य शरीरमाकाङ्क्षाविमुक्ताशयः समस्तसुखपरम्परापात्रमभूत्, एवं धर्मविषयेऽपरापरदर्शनाकाङ्क्षां कुर्वाणः प्राणी तत्साध्यसुदेवत्वादिसुखानि नाप्नोति, प्रत्युत मिथ्यात्वमुपगतो नारकादिभवपरम्परामासादयति, अत इयमपि न कार्येति ।

विचिकित्सादिपदेषु यथादृष्टान्येवोदाहरणानि प्रदर्श्यन्ते, तत्र विचिकित्सायाम्—सावत्थीए नयरीए जिणदत्तो नाम सावओ अहिगयजीवाजीवो उवलद्धपुण्णपावो दुवालसविहसावयधम्मविहिसमुवेओ आगासचारी य, अण्णया णं-

पेच्छंतो जत्तमहिमाव-
दीसरवरदीवं जिणमहिमदंसणत्थं गओ तहिं, सो य देवपरिमलेन वासिओ जिणाण पूयं पेच्छंतो जत्तमहिमाव- 
साणे सपुरिं समागओ, तत्थ य तस्स महेसरदत्तो णाम मित्तो चिट्ठइ, तस्स मिलिओ तेण पुट्ठो ।—किमेरिसो अज्ज
तव परिमलो अपुव्वो देवलोयतुल्लो ?, तओ तेण परिकहियं—जहाऽहं नंदीसरवरचेइयपूयं दट्ठुं गओ, तत्थेस देव-
परिमलो मे लग्गो, महेसरदत्तो भणइ—कहं तत्थ गओऽसि ?, जिणदत्तो भणइ—आगासगामिणीए विज्जाए, महे-
सरो भणइ—मम देहि विज्जं, पसायं कुरु, जेणाहमवि आगासेण गच्छामि, सावएण भणियं—पयच्छामि, किं तु
दुस्साहा, तेण भणियं—साहिस्सामि, तओ साहणोवाओ कहिओ, जहा—किण्हपक्खचाउद्दसीए मसाणे गंतूण चउ-
प्पायं सिक्कगं काऊण उवरिं रुक्खे बज्झइ, हेट्ठा य अंगारखाइया कीरइ, पच्छा सिक्कगे आरुहिय मंतं अट्ठसय-
वारा परिजविय पाओ सिक्कगस्स छिज्जइ, एवं मंतं पढिउं सव्वे छिंदियव्वा, तओ आगासेण गम्मइ, मंतो य से
दिण्णो, पडिवण्णं च तेण, अण्णया किण्हचउद्दसीए सामग्गिं काऊण गओ मसाणभूमिं, तओ खाइरकट्ठविचि(चिति)-
ओ उवरिं रुक्खे सिक्कगं बंधेऊण ठिओ, पढइ अट्ठसयवारं मंतं, चिंतेइ य,—एवं चत्तारि सिक्कगपाया छिंदियव्वा, तओ
ण याणिमो सिज्झिहिइ णवा ?, इय चिंतिऊण उत्तिण्णो, पुणोऽवि चिंतिउं पवत्तो—दत्तो मम सावएण उवरोहेण

मंतो, बहूणं च दिणाणं चाउद्दसी आगमिस्सइ, तओ पुणोऽवि आरुहिऊण सिक्कंगं हेट्ठओ पेक्खइ खाइरअंगाराचिइं, तओ उत्तिण्णो, एवं जाव चडउत्तरं करेइ ताव इओ दक्खेण चोरेण राइणो अंतेउरे खत्तं दाऊण रयणकरंडिया पाविया, गेण्हिउं णिग्गओ, कुढिया पिट्ठओ लग्गा, तओ सो ताण भएण तंमि चेव उज्जाणे पविट्ठो, कुढिएहिं चिंतियं—सो एस णासिही मारेस्सइ वा, तओ उज्जाणं वेढिऊण चिट्ठामि, पुणो पच्चुसे गहिस्सामि, सोऽवि तं णाउं उज्जाणा परिसक्कइ जाव जलंतो दिट्ठो अग्गी मणुस्सो य उत्तरचडं करेमाणो, चिंतिउं पवत्तो—किमेयंति, तओ तस्स समीवे गओ, पुट्ठं च—कओ तुमं किमत्थं वाऽऽगओ ?, तेण भणियं—अहं एयाओ णयराओ विज्जासाहणजुओ विज्जं साहेउं, चोरेण भणियं—एगचित्ताणं णिप्पकंपाणं विज्जा सिज्झइ, ण उण उत्तरचडाए, तेण भणियं—सच्चमेयं, किन्तु आरूढो संतो बीहेमि किं विज्जा सिज्झिहिति नवत्ति, चोरेण भणियं—केण विज्जासाहणो मंतो दिण्णो ?, तेण भणियं—सावगेण, सो य मित्तो मज्झं, चिंतियं च तेण—सावगा कीडियाएवि पावं णेच्छंति, अओ सच्चमेव, एस साहेउं न सक्कइ, तओ तेण भणियं—अहं साहेमि, मम साहणोवायं मंतं च पयच्छ, अहं तुज्झ रयणकरंडियं देमि, तेण पडिवण्णं—एवं होउ, माहेसरो वितिगिच्छासमावण्णो चिंतेइ—इमा विज्जा सिज्झेज्ज ण वा ?, एसा उ पच्चक्खफलंति,

तओ समप्पिया रयणकरंडिया, तओ चोरेण दढचित्तेण विज्जा साहिया, साहेउं आगासेण उप्पइओ, इयरोऽवि रायपुरिसेहिं पभाए गहिओ सलोत्तो य पाविओ रण्णो निवेइओ, रण्णा वज्झो आणत्तो, सूलीए आरोविउं णीओ, तओ विज्जासिद्धेण उवओगो दिण्णो—किं मम गुरुणो वट्टइ ?, जाव पेच्छइ वज्झं णिज्जंतं, तओ णयरस्सुवरिं सिलं विउव्वइ, आगासत्थो लोयं भणइ—एस णिद्दोसो, पूएऊण मुक्को, दोऽवि सड्ढा जाया, एए वितिगिच्छाए दोसा तम्हा निव्वितिगिंछेण होयव्वं ।

अहवा विउगुच्छत्ति वक्खायं, तत्थोदाहरणं—पच्चंतविसए सालिग्गामो णाम गामो, तत्थ धणमित्तो णाम सावगो वसइ, धणसिरी णाम धूया, तीसे विवाहे साहुणो आगया, तओ तेण हरिसं गएण णिमंतिया, वेलाकाले आगयाण साहूणं सा धूया पिउणा भणिया—पुत्ति! तुमं चेव साहुणो पडिलाहेहि, तओ सा मंडिया विहूसिया पडिलाभेइ जाव जेट्ठासाढदिणेसु साहूणं जल्लपरसेवेण अहिओ गंधो जाओ, तओ सा अग्घाइऊण चिंतेइ—अहो अणवज्जो भट्टारएहिं धम्मो देसिओ, जइ पुण इमे साहुणो फासुएण पाणिएण ण्हाएज्जा तओ को दोसो होंतो ?, तओ सा इहलोए कामभोए भुंजिऊण तस्स ठाणस्स अणालोइयापडिक्कंता कालं काऊण राय·

गिहे णगरे गणिया पोट्टे उववण्णा, गब्भगयाए चेव तीए गणियाए अरई उप्पण्णा, तओ अणाए अणेगाणि गब्भ-पाडणाणि कारिया, तहावि आउयबलियत्तणेण ठिया जाव जाया, तओ तीए दासचेडीए समप्पिया जहा छड्डेऊण आगच्छ, जत्थ य सा तीए छड्डिया सो पएसो असुइगंधेण अईव वासिओ, तंमि णगरे तत्थ काले भगवं वीरो समोसरिओ, सेणिओ य तं णाउं सव्वबलेण वंदिउं गच्छइ, जाव अग्गिमसेण्णं तीए गंधमसहमाणं अण्णमग्गेण लग्गं, ताहे रण्णा पुट्ठं—किमेस लोओ अण्णपहेण गच्छइ ?, तओ एगेण भणियं—जहेत्थ दारिया अईगंधजुत्ता, तीए गन्धमसहंतो अण्णमग्गेण गच्छइ, तओ रण्णा कुतूहलेण गंतूण दिट्ठा, चिंतियं चऽणेणं—अहो एयाए रूवसंपया, गंधो पुण एरिसो, ता गंतूण भगवंतं पुच्छिस्सं—कस्स कम्मस्स एरिसं फलं ?, तओ गंतुं भगवंतं वंदइ परमेण विणएणं, वंदिउं उवविट्ठो पुच्छइ--भयवं ! किं ताए पुव्वभवे कयं जेण रूवसंपओववेयावि दुग्गंधा ?, तओ तीए तिलोयणाहेण पुव्वभवो कहिओ, वेइयं च संपयं कम्मं, तओ तेण भणियं—तीसे का गई भविस्सइ ?, सावय ! सा तुज्झ पहाणभज्जा भविस्सइ अट्ठ संवच्छराणि, कहमहं जाणिज्जा ?, तओ वीरेण भणियं—जा तुमं पासएहिं जिणिउं पट्ठीए वत्थं दाउं वाहिस्सइ तं जाणेज्जाहि

जहेसा सा, तओ धम्मं सोउं भगवंतं वंदित्ता नगरं पविट्ठो, साऽवि गयगंधा जाया, तओ सा आभीरेहिं कारणा-
गएहिं गहिया, रायगिहं णेऊण भज्जाए समप्पिया, तीए धीयत्ताए पडिवण्णा, मयहरपुत्तेणं सुहेण परिपालिया
जोव्वणत्था जाया, रायगिहे कत्तियपुन्निमाए कोमुइचारो णाडगणट्टियाहिं पेच्छणगाणि भवन्ति, तओ सा दारिया
माउए समं पेच्छया आगया, तओ मयहरभज्जाए समं एक्कंमि पेच्छणए पेच्छंती चिट्ठइ, तओ सेणिओ राया
अभएण समं पच्छण्णरूवो तत्थेवागओ, तओ तीए रूवाइसयं दट्ठुं अंगफासं च अणुहविय अज्झोववण्णो—कहं
एसा मम भविस्सइत्ति, छलेण पत्थिओ कामो, तीसे उत्तरीए णामंकियं मुद्दं बंधेऊण भणइ—मम केणावि मुद्दिया
हरिया, अओ अभयकुमारेण पच्चक्खेण होऊण मणुस्सा सद्दाविया, जहा केणइ राइणो मुद्दा गहिया, दारेसु चिट्ठह,
एक्केक्कं माणुसं पासिऊण मेल्लह, तेहिं तहेव सव्वं कयं, जाव तीए दारियाए ओढणए दिट्ठा, राइणो कहियं—चोरित्ति
गहिया, तेणावि अंतेउरे णेयाविया, विभूईए परिणीया य, अईव इट्ठा जाया, कालेण पासएहिं रमंति, जो य
जिप्पइ सो पिट्ठीए वाहेयव्वो, तओ तीए राया जिओ, तओ सेसराणियाओ जइ रायाणं जिणंति तओ पिट्ठीए
पोत्तं दाउं उवरिं हत्थं देंति, इयरी पुण पोत्तं दाऊण विलग्गा, रण्णा सामिवयणं सरिऊण हसियं, सा विलक्खि-

या पुच्छइ—किं तए हसियं ?, राइणा भणियं--न किंचि, तहावि सा णिब्बंधेण पुच्छिउं पवत्ता, तओ रण्णा सव्वं पुव्वभवाइयं जिणभणियं कहियं, तओ सा संवेगमावण्णा रायं विण्णवेइ—मुंचाहि दिक्खं पवज्जामि, तओ राइणा मुक्का पव्वइया य। अओ दुगुंछाए विवागं जाणिऊण ण कायव्वा दुगुंछत्ति।

परपाषण्डप्रशंसायां शकटालकथानकं यथा—पाडलिपुत्ते नयरे कप्पगवंसे णंदवंसेण सममणुवत्तमाणे नवमे नंदंमि रज्जधुरं धारयंते कप्पगवंसपसूओ चेव सयडालो नाम मंती, तस्स य पुव्वं सिरिवच्छोत्ति नामं आसि, पच्छा पुत्तसए समुप्पण्णे राइणा सयडालोत्ति नामं कयं, पसरियसयसाहोत्तिकाउं, तस्स य चायभोयदक्खिण्णला-वण्णाइगुणेहिं पुत्तसयस्सवि पहाणतमो थूलभद्दो नाम पुत्तो सिरिओ य सव्वकणिट्ठो, इओ य—तत्थेव नयरे वररुई नाम धिज्जाइओ, सो य नवनवेण अट्ठुत्तरसएण सिलोगाण नंदरायं ओलग्गइ, तुट्ठोऽवि राया न किंचि से देइ, केवलं सयडालमुहमालोएइ, सो य मिच्छत्तंति काउं न पसंसइ, तओ वररुइणा तमट्ठं जाणिऊण सयडालभज्जा ओलग्गिया, पुच्छिओ तीए, कहिओ तेण सब्भावो, ताहे तीए कहिंचि पत्थावे भणिओ भत्ता—कीस तुमं वररुइस्स कव्वं नरिंदपुरओ न पसंसासि ?, भणियं—कहं मिच्छत्तं पसंसेमि, ? तीए भणियं—उवरोहसीला खु महापुरिसा

हुंति, भावदोसो हु वज्जियव्वो, न य अणूवि सो तुज्झ अत्थित्ति पसंसेज्जसुत्तिं, तहावि नेच्छइ पसंसिउं, तओ अण्णदियहंमि पुणो भणिओ, ताहे पुणो २ महिलाए भणिज्जमाणेण अण्णया राइणो पुरओ पढंतस्स वररुइणो भणियं मंतिणा—अहो सुभासियंति, तओ राइणा दीणाराण अट्ठसयं दिण्णं, एवं चेव दिणे २ दाउमाढत्तो राया, तओ मतिणा चिंतियं—निट्ठिही रायकोसो एवंविहवएण, ता करेमि किंचि उवायं, तओ नंदं भणइ—भट्टारगा ! किं तुब्भे एयरस देह ?, तेण भणियं—तुमे पसंसिओत्ति, सो भणइ—अहं पसंसामि लोइयकव्वाणि आविणट्ठाणि पढइ, राया भणइ—कहं लोइयकव्वाणि एस पढइ ?, सयंकयकव्वपाढगो खु एसो, सयडालेण भणियं—मम धूयाओऽवि जओ पढंति, किमंग पुण अण्णो लोओ ?, तस्स य मंतिणो सत्त धूयाओ, तंजहा—जक्खिणी १ जक्खदिण्णा २ भूइणी ३ भूयदिण्णा ४ सेणा ५ रेणा ६ वेणा ७, तासिं च पढमा एक्कसंधिया एक्कवाराए सुयं सिलोगसयंपि गिण्हइ- बीया दुसंधिया एवं जाव सत्तमा सत्तवाराहिं सुयं सिलोगसयंपि गेण्हइ, तओ राइणो पच्चायणत्थं अण्णदियहंमि कय, संकेयाओ अंतेउरे जवणियंतरियाओ धरियाओ सत्तवि कण्णगा, समागओ वररुई, पढियं सिलोगट्ठसयं, निसुयं ताहिं, भणियं मंतिणा—देव ! जइ तुब्भे आइसह तो नियधूयाओऽवि हक्कारिऊण एयं पढावेमि, राइणा भणियं—तुरियं

हक्कारेत्ता पढावेसु, तओ जहाऽऽणवेइ देवोत्तिभाणिऊण मंतिणा आणत्तो अंतेउरमहल्लओ, जहा–भद्दमुह ! एत्थ काहिंपि जइ मह धूयाओ आगयाओ संति ता सिग्घं रायसमीवमाणेसु,एवं करेमित्ति भणिऊण गओ सो अंतेउरं,दिट्ठाओ तत्थ ताओ, गहिऊणं समागओ निवसमीवं, पायवडणुट्ठियाओ य नरवइस्स उवविट्ठा पिउसमीवे, भणिया जक्खिणी मंतिणा–वच्छे ! जमेवंविहवण्णत्थोववेयं सिलोगट्ठसयं अज्ज वररुइणा पढियं तं तुह एइ ?, तीए भणियं–आमं, तो खाइ सुणावेसु रायाणं, तओ अक्खलियललियवाणीए सुणाविओ राया, जक्खादिण्णाए दोण्णि परिवाडीओ जायाओ, तओ सावि तहेव भणिया अमच्चेण, तीएवि तहेव सुणाविओ ताव जाव सत्तहिंवित्ति, तओ रुट्ठेण राइणा वररुइस्स दाणं वारियं, पच्छा सो ते दीणारे रत्तीए गंगाए नईए जंतेण धरिउं पहाए सयललोयपच्चक्खं गंगं थोऊण पाएण जंतमक्कमिऊण उच्छलिए दीणारे गंगा देइत्ति भाणिऊणं तो गेण्हइ, तहाविहपवंचेण कओ सयलोत्ति लोओ हयहियओ, कालंतरे य निसुयं राइणा, तओ भाणिओ सयडालो–जइ लोइयकव्वाणि पढइ वररुई तो कहं गंगा तुट्ठा दीणारे से देइ ?, तओ पढियं मंतिणा–" आडंबरस्स पाओ, पाओ डंभस्स विज्जया पाओ । गलगज्जियस्स पाओ, हिंडइ धुत्तो चउप्पाओ ॥ १ ॥ " राइणा भणियं–जइ एवं तो किमेस सव्वोऽपि जणो तग्गुणगहणवावडो

अणवरयं चिट्ठइ ?, मंतिणा भणियं—देव ! अविण्णायपरमत्थो जणो, जइ पुण न एवं तो तत्थेव गंतुं पेच्छामो कोउयंति, तओ तमत्थं पडिवज्जिऊण राइणा भणियं—पभाए चेव गमिस्सामो, एवं कीरउत्ति भणिऊण उट्ठिओ मंती, गओ नियगेहं,वियालवेलाए आइट्ठो पच्चइयपुरिसो,जहा—गंतूण गंगाए अलक्खिओ अच्छिऊण जं किंचि वररुई ठवेइ तं आणेज्जसुत्ति, तेणवि संपाडियं जहाइट्ठं मंतिणो, पहाया रयणी, कयगोसकायव्वो गओ मंती राउलं, रायवि समं मंतिणा गओ तद्दंसणत्थं, गंगं थुणंतो दिट्ठो वररुई, थुए निव्वत्ते मग्गिउं पयट्टो जंतं पाएण हत्थेण य, णत्थि, तओ विलक्खो जाओ, एत्थंतरंमि सयडालेणं जइ गंगा न देइ तो अहं देमि गिण्हसुत्ति भणिऊण कड्ढिया दीणारपोत्ती, दंसिऊण राइणो समप्पिया तस्स, सोऽवि ओहामणाए नियमुहं दंसिउमपारयंतो नीहरिओ तट्ठाणाओ, पओसमावण्णो मंतिणो उवरि, छिड्डाणि से मग्गइ, पयट्टो तस्स दासिं ओलग्गिउं, तीसे सयासे पुच्छइ निच्चमेव तग्गिहव-इयरं, सावि मुद्धयाए सव्वं कहेइ, अण्णया सिरियस्स विवाहूसवे रण्णो ढोइयव्वंति बुद्धीए तग्गेहे आओगो सज्जिज्जइ, तओ तीए साहियं वररुइणो, तेणवि लद्धं छिद्दंति चिंतियं, तेण चेडरूवाणि मोयगेहिं उवयरिऊणाढत्ताणि पढावेउं, "एहु लोउ नवि जाणई जं सयडालु करेसइ । राय नंदु मारेविउ सिरियउ रज्जि ठवेसइ ॥ १ ॥" तं च परंपराए सुयं राइणा,

परिक्खावियं पच्चइयपुरिसेण मंतिगिहं जाव दिट्ठाइं आओगाइं सज्जिज्जमाणाइं,तओ कुविओ राया, आगओ सयडालो, जत्तो २ सयडालो पाएसु पडइ तत्तो २ परम्मुहो ठाइ राया,ताहे गओ घरं मंती,तया य सिरिओ नंदस्स पडिहारो,सो हक्कारिऊण भणिओ–वच्छ ! राया तेण धिज्जाइएण वुग्गाहिओ अम्होवरिं, तो जाव कुलक्खयं न करेइ ताव कुलरक्खानिमित्तं तुमं रण्णो पायपडियं ममं मारेसु, सो नेच्छइ, सयडालो भणइ–अहं तालउडं विसं भक्खिहामि पायपडणसमए, तओ तुमं घायं करेज्जसुत्ति, तेण पडिस्सुयं, कयं च तहेव, एवं च सयडालेण अवि जीवियं परिचत्तं, न परतित्थियपसंसा कया, एवमण्णेणऽवि न कायव्वात्ति ।

परतीर्थिकोपसेवायां तु सौराष्ट्रश्रावकोपदर्शनं, तत्कथानकं च मिथ्यात्वोत्पत्तिद्वारे संसर्गजमिथ्यात्वेऽभिहितमिति नोच्यते । ननु अन्येऽप्यनुपबृंहणादयोऽतिचारभेदाः सन्त्येव, यदाह–" संथवमाई य नायव्वे " त्यादिशब्दं व्याख्यानयन्तः पूज्यपादाः–" अण्णेवि य अइयारा आईसद्देण सूइया एत्थ । साहम्मिअणुववूहणमथिरीकरणाइया ते उ ॥ १ ॥ " तत्किमत्र सूत्रे नियतसङ्ख्याप्रातिपादकं पञ्चशब्दोपादानं ?, सत्यमुपलक्षणत्वाददोषः, किञ्च-' दूसंति सम्मत्त ' मिति विशेषणेनेदं लक्ष्यते–सम्यक्त्वदूषकत्वेन शङ्कादयोऽतिचाराः, ततश्चान्येऽप्यनुपबृंहणादयो ये

परिणामविशेषाः सम्यक्त्वं दूषयन्ति तेऽनुक्ता अप्येतज्जातीयकत्वादाक्षिप्ताः, न चैते न सम्यक्त्वदूषकाः, यथाऽऽहुः पूज्यपादाः—" नो खलु अप्परिवाडिए निच्छयओऽमइल्लिए व सम्मत्ते । होइ तओ परिणामो जत्तो अणबूहणाईया ॥ १ ॥ " अत एषामप्युदाहरणानि श्रोतॄणां सुखावगमाय दर्शनीयानि, तानि च यद्यपि साधर्म्यवैधर्म्यभेदाद् द्विधा संभवन्ति तथाऽपि मूलवृत्तिकृता 'उपबृंहणायां श्रेणिकराजा स्थिरीकरणे आर्याषाढो वात्सल्ये वज्रस्वामी प्रभावनायां विष्णुकुमारादयो दृष्टान्ता यथायोगमभ्यूह्य वाच्या' इत्युक्तमतो मयाऽपि तान्येव प्रपञ्च्यन्ते, अत्र चानुपबृंहणं नामोपबृंहणाया अकरणस्वभावम्, उपबृंहणा च ज्ञानदर्शनादिगुणान्वितानां सुलब्धजन्मानो यूयं युक्तं च भवादृशामिदमित्यादिवचोभिस्तद्गुणोत्कीर्त्तनरूपा, तस्यां श्रेणिको निदर्शनं, यत उपबृंहितोऽसौ देवादिभिः सद्भूतगुणश्लाघया, अथवा श्रेणिकेनोपबृंहणा संजयसाधोर्या कृता सा दृष्टान्ततया वाच्या, यतस्तत्कथानकमेवम्—

पुरा मगधजनपदे राजगृहनगरस्वामी चतुरङ्गयूथिनीबलोद्दलितनिखिलारातिचक्रः श्रेणिकनामा नृपतिरासीत्, स चान्यदाऽश्ववाहनिकायां निर्गतो विकसितविविधकुसुमसमूहावच्छादितानेकद्रुमलतोपशोभिते समुत्पतन्निपतन्नानाविधविहगावलीविराजिते मण्डिकुक्षिनाम्न्युद्याने तरुमूलव्यवस्थितमसमशमसमाधिनिषण्णमानसं परित्य-

क्तनिखिलपापस्थानं तपस्विनमेकमद्राक्षीत्, दृष्ट्वा च तमसौ अहो ! अपूर्वा काचिदेतस्य रूपलक्ष्मीः अनन्यसमाना सौम्यता असाधारणा क्षान्तिः अनन्यतुल्या निःसङ्गतेत्यादि चिन्तयन् परं विस्मयमगात्, विस्मितचित्तश्च नृपतिस्तदन्तिकमागत्य प्रदक्षिणाकरणपूर्वमभिवन्द्यानतिदूरदेशविहितासनपरिग्रहो विनयविरचिताञ्जलिपुटस्तमवोचत्, यथा-भगवन् ! भवान् किमिति तरुण एव विषयसौख्योपभोगकाले विशिष्टरूपविग्रहोऽप्यविग्रहः सकलभोगाङ्गपरित्यागसुस्थितं व्रतं कर्त्तुमारब्धवान् ? इति ज्ञातुमिच्छति सकौतुकं नश्चेतः, तत्कथ्यतां यदीह नातिबाधकं स्वाध्यायादियोगानामित्युक्तः स मुनिस्तमुवाच—महाराज ! श्रूयतां यदि कौतुकं, अहमनाथतादुःखदुःखितो नानाविधारातिभिः पराभूयमानस्तथाविधं कमपि माभीप्रदातारमपरमपश्यन्नत्यन्तानिर्विण्णो व्रतं कर्त्तुमारब्धवान्, एतच्चाकर्ण्य किञ्चित्सप्रहासवदनः श्रेणिकोऽवदत्—भगवन् ! एवंविधविशिष्टाऽऽकृत्युपलक्ष्यमाणगुणवत्त्ववशीकृताशेषसम्पदोऽपि तव कथमनाथत्वं ?, यतो " यत्राकृतिस्तत्र गुणा वसन्ती"ति लोकप्रवादः, तथा " सूरे त्यागिनि विदुषि च वसति जनः स च जनाद्गुणीभवति । गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम् ॥ १ ॥ " एवंविधश्चान्यजनस्यापि नाथो भवति, यदि चानाथतामात्रमेव प्रव्रज्या-

प्रतिपत्तिहेतुस्तदाऽहमेव नाथो भवामि भवतः, मयि च नाथे न कश्चित्त्व पराभवविधाता, अतो निराकुल एव विषय-
सुखमनुभव, इत्युक्तवति राजनि मुनिरवादीत्—राजन् ! सौर्यौदार्यादिगुणसूचकाकृतिमात्रेणैव न नाथैर्भूयते, नापि
स्वयमेवानाथो भवान् मम नाथवत्तां कर्तुं शक्नोति, न च त्वयि समाश्रितेऽप्यमी अरातयो मम पृष्ठं मुञ्चन्ति, अतः कथं
निराकुलो विषयसुखमनुभवामि ?, इत्युक्ते मुनिना नृपतिराह—भदन्त ! आस्तां तावदपरम्, एतावन्मात्रं पृच्छामि, अह-
मत्र चतुरङ्गबलकलितराज्यसम्पत्समध्यासितोऽपि प्रतापवानमितानेकसामन्तोऽप्यवदलितवैरिनिकरोऽप्यप्रतिहताज्ञोऽपि
सम्पद्यमानमानसाभीष्टपञ्चविधविषयसौख्योऽपि कथमनाथः ?, कथय, मुनिराह—नरनाथ ! यथाऽनाथता मया विवक्षिता
न तादृशी त्वया परिभाविता, मया हि स्वानुभूतानाथत्वविवक्षयेयमुपदर्श्यते, तथाहि—पुरा कौशाम्ब्यां प्रभूतधनसञ्चयः
पिता मे बभूव, तत्पुत्रश्चाहं सजयाभिधानोऽतीव प्राणप्रियः पितुरभूवं, अन्यदा च ममाऽऽकस्मिको जनितसर्वाङ्गीणदा-
घवेदनोऽक्षिकुक्षिपर्शुकासु गाढशूलव्यथाप्रवर्त्तकस्तन्त्रमन्त्रमूलिकादिभिरपि सुदुर्वारो महाव्याधिरुदभूत्, तदभिभूतस्य
च मम प्रगुणीकरणार्थमाहूताः पित्राऽनेके चिकित्साशास्त्रविशारदा वैद्या मन्त्रतन्त्रज्योतिष्कादिविदोऽन्ये च बहवो
लोकाः, प्रारब्धास्तैरात्मीयात्मीयाश्चिकित्साः, न च स्वल्पोऽपि मे ताभिः प्रतीकारः संपन्नः, पिता च मे यः

कश्चिदेनं प्रगुणीकरोति तस्य सकलमेव स्वहस्तेन स्वगृहसारं प्रयच्छामीति प्रतिपादयन् माता च मम दुःखदुःखिता हा वत्स ! कदा प्रगुणो भविष्यसीत्यादि विलपन्ती भ्रातरश्च ज्येष्ठकनिष्ठा नानाविधान् अङ्गसंबाधनाद्युपचारान् विरचयन्तः भार्या च हा नाथ ! प्राणेभ्योऽपि प्रियतम ! किमेतत्ते जातमित्यादि प्रलापान् कुर्वन्ती अन्योऽपि च स्वजनमित्रदासीदासादिपरिकरो गाढं मद्दुःखदुःखितात्मा क्षणमात्रमपि मत्सकाशममुञ्चन् न तिलतुषमात्रमपि दुःखमुपहृतवान्, इत्थं चानाथतादुःखदुःखितस्य मे न कश्चित् किञ्चित्परित्राणं कृतवान्, ततोऽहं चिन्तयामास— तीव्रगाढव्याधिवेदनाभिभूतः खलु अहमिदानीं, न चेहैवेयं मे, किन्त्वन्यत्रापि नरकादिभवे विचित्रवेदना अनुभूतवान्, न चैतत्पीडितस्य माभीप्रदाता कश्चित्संभाव्यते, एतन्मूलं च मेऽमी दुर्वाराः कषायारातयो, न च ममैवैवं, किन्तु सकलस्यापि संसारिणो जीवराशेः, अतो यदि कथञ्चिदितो विमुच्येयं ततः परित्यक्तसकलसावद्यः स्वस्य परस्य च नाथताहेतुं व्रतं कषायारातिदर्पापहं चरिष्यामि, एवं च विचिन्तयतः परिगलन्त्यां रात्रौ क्षयं गता मे वेदना, ततश्च प्रभातसमये विहिततदुचितकर्तव्य आपृच्छ्य पितृप्रमुखं बान्धवजनं परित्यक्तसकलपापस्थानोऽनगारतां प्रपन्नः, तद् भो राजन् ! इदमत्र तात्पर्यं-संसारिणां जीवानामनेकभवपरिवर्तनाखिन्नानां शारीरमानसानेकदुःखसम्पातपीडि-

तानां नाम न कश्चित्परित्राणहेतुः मुक्त्वा धर्मम्, अतो मयाऽयं समाश्रित इति, श्रुत्वा च श्रेणिकः प्रहृष्टचेतास्तमुपबृं-
हितवान्-भदन्त ! सत्यमनाथत्वमुपदर्शितं भवता, सुलब्धं हि भवतो मानुषं जन्म, येनैवं सकलमपि
जगन्नाथं विज्ञाय परमनाथः कषायारातिदर्पोच्छेदकारी निःशेषशारीरमानसदुःखनिराकरणदक्षो धर्मः
समाश्रितः, इत्याद्युपबृंह्याभिवन्द्य च यो मया प्रश्नविधानेन भवतां स्वाध्यायविघ्नः कृतः स क्षमणीय इत्यभिधाय
स्वाश्रयं जगाम, यथा च श्रेणिकेन तस्योपबृंहणा कृता तथाऽन्येनापि कार्या, यो न करोति सोऽतिचरति सम्य-
क्त्वमिति प्रस्तुतार्थयोजनेति । इयं चोत्तरत्रापि योजनीयेति, अस्थिरीकरणमपि स्थिरीकरणस्याकरणरूपं, स्थिरीकरणं
चाभ्युपगतधर्मानुष्ठानं प्रति विषीदतां स्थैर्यापादानमभिधीयते, तत्र चार्याषाढसूरिः स्वाशिष्यास्थिरीकृतो दृष्टान्तः, तत्कथा
चोत्तराध्ययनबृहद्वृत्तितो यथादृष्टैव लिख्यते—

अत्थि वच्छाभूमीए अज्जासाढ़ा नामायरिया बहुस्सुया बहुसीसपरिवारा य, तेसिं गच्छे जो कालं करेति तं
णिज्जावंति ते भत्तपच्चक्खाणाइणा, तओ बहवे णिज्जामिया, अण्णया एगो अप्पणतो सीसो आयरतरेण भणितो—
देवलोगाओ आगंतुं मम दरिसणं देज्जासु, ण य सो आगतो वक्खित्तचित्तत्तणओ, पच्छा सो चिंतेति-सुबहुं

कालं किलिट्ठोऽहं, सालिंगेण चेच ओहावइ, पच्छा तेण सीसेण देवलोगगएण आभोइतो, पेच्छति ओहावेंते, पच्छा तेण तस्स पहे गामो विउव्वितो, णडपेच्छाए सो तत्थ छम्मासे पेच्छंतो अच्छिओ, ण छुहं ण तण्हं कालं वा दिव्वप्पभावेण वेएति, पच्छा तं सहरिउं गामस्स बहिं विजणे उज्जाणे छद्दारए सव्वालंकारविभूसिए विउव्वति, संजमपरिक्खत्थं, दिट्ठा तेण ते, गिण्हामि एएसिमाहरगाणि, वरं सुहं जीवितोत्ति, सो एगं पुढविदारयं भणइ— आणेहि आभरणगाणि, सो भणति-भगवं ! एगं ताव मे अक्खाणयं सुणेहि, ततो पच्छा गेण्हिज्जासि, भणइ—सुणेमि, सो भणइ—एगो कुंभकारो, सो मट्टियं खणंतो तडीए अक्कंतो, सो भणति—'जेण भिक्खं बलिं देमि, जेण पोसेमि नायओ । सा मे मही अक्कमइ, जायं सरणओ भयं ॥ १ ॥' एत्थुवणओ-चोराइभयाओ अहं तुमं सरणमागओ, तुमं च एव विलुंपासि, अओ ममवि जायं सरणओ भयं, एवमण्णेसिवि उवणओ भाणियव्वो, तेण भण्णइ—अइपंडिओसि बालयत्ति, घेत्तूण आभरणगाणि पडिग्गहे छूढाणि, गओ पुढविकाइओ १। इयाणिं आउक्कायदारओ बीओ, सोऽवि अक्खाणयं कहेइ, जहा—एगो तालायरो कहाकहओ पाडलओ नाम, सो अण्णया गंगं उत्तरंतो उवरिवुट्ठोदएण हीरइ, तं पासिऊण जणो भणइ—बहुस्सुयं चित्तकहं, गंगा वहइ पाडलं ।

वुज्झमाणय भद्दं ते, लव किंचि सुभासियं ॥ १ ॥ तेण भणियं-जेण रोहंति बीयाणि, जेण जीवंति कासया । तस्स मज्झे विवज्जामि, जायं सरणओ भयं ॥ २ ॥ अइवियक्खणोऽसि दारयत्ति भणंतेण सोऽवि तहच्चिय मुसिओ, एस आउक्काओ बीओ २ ॥ इयाणिं तेउक्कायदारओ तइओ, तहेव अक्खाणयं कहेइ—एगस्स तावसस्स अग्गिणा उडओ दड्ढो, पच्छा सो भणइ—' जमहं दिया य राओ य, तप्पेमि महुसप्पिसा । तेण मे उडओ दड्ढो, जायं सरणओ भयं ॥ १ ॥ अहवा-वग्घस्स मए भीएण, पावओ सरणं कओ । तेण अंगं ममं दड्ढं, जायं सरणओ भयं ॥ २ ॥' अइसयाणोऽसि वच्छगत्ति भणंतेणं सोऽवि मुसिओ, एस तेउक्काओ३ ॥ इयाणिं वाउकायदारओ, सोऽवि तहेव अक्खाणयं कहेइ—जहा एगो जुवाणओ घणनिचियसरीरो आसि, सो पच्छा वाएण गहिओ, अण्णेण भणइ—' लंघणपवणसमत्थो, पुव्विं होऊण संपयं कीस ?। दंडगहियग्गहत्थो, वयंस ! किं-नामओ वाही ? ॥ १ ॥' तेण भण्णइ—जेट्ठासाढेसु मासेसु, जो सुहो वाइ मारुओ । तेण मे भज्जए अंगं, जायं सरण-ओ भयं ॥ २ ॥ अहवा-जेण जीवंति सत्ताइं, निरोहंमि अणंतए । तेण मे भज्जए अंगं, जायं सरणओ भयं ॥ ३ ॥ अइविसारओऽसि सुंदरत्ति भणंता तस्सवि तहेव गेण्हइ, एस वाउक्काओ गओ । इयाणिं वणस्सइकायदारओ

पंचमो, तहेव अक्खाणयं कहेइ, जहा—एगंमि रुक्खे केसिंपि सउणाणं आवासो, तहिं च णं तेसिं पिल्लगाणि जायाणि, पच्छा रुक्खब्भासाओ वल्ली उट्ठिया, रुक्खं वेढंती उवरिं लग्गा, तयणुसारेण अण्णया सप्पेणारुहिऊण ते पिल्लगा खइया, पच्छा सेसगा भणंति—'जाव वुत्थं सुहं वुत्थं, पायवे निरुवद्दवे। मूलाओ उट्ठिया वल्ली, जायं सरणओ भयं ॥ १ ॥' अइमेहावंतोसि पुत्तयत्ति भणंतो तस्सवि तहेव गिण्हइ, एस वणस्सइकाओ५ ॥ इयाणिं तसकायदारओ छट्ठो, सोऽवि पारद्धो तहेव अक्खाणयाइं कहेइ, जहा एगं नयरं परचक्केण रोहियं, तत्थ बाहिरनिवासिणो मायंगा ते नगर-मज्झाओ नागरएहिं निच्छुब्भंति, बाहिं परचक्केण घेप्पंति, पच्छा केणइ भण्णइ'-अब्भितरया खुहिया, पेल्लंती बाहिरा जणा। दिसं वयह मायंगा!, जायं सरणओ भयं ॥ १ ॥' अहवा-एगत्थ नगरे सयमेव राया चोरो पुरोहिओ य भंडेइ, तओ दोवि हरंति, पच्छा लोओ तं वइयरं मुणिऊण अण्णमण्णं भणइ—'जत्थ राया सयं चोरो, भंडिओ य पुरोहिओ। दिसं वयह नागरया, जायं सरणओ भयं ॥१॥ अहवा एगंमि नयरे चोद्दसविज्जाठाणपारगतो छक्कम्मनिरओ सोमदेवो नाम दियवरो, सोमसिरी भारिया, तीए परितुलियरतिरूवजोव्वणलायन्नकलाकलावा सोमप्पभा णाम कण्णगा, संपत्तजोव्वणा य पलोइया जणएण, जायाणुराओ, तीए विरहे खिज्जंतं दट्ठूण निब्बंधे भारियाए पुट्ठेण साहिओ निययाभिप्पाओ,

अव्वो मा मयणसरगोयरावडिओ खयं वच्चउत्ति भावेंतीए भणिओ भत्तारो-धीरो हवसु, तहा करेमि जहा अनाओ च्चिय भुंजसि, अन्नयरदियहंमि भणिया धूया—वच्छे! एस अम्हाण कुलक्कमो-पढमं जक्खेण भुत्ता पच्छा भत्तारमणुगच्छति, ता कल्लं कसिणचउद्दसीए तमंधयारे रतिहरे अणालवंती माणेज्जसु जक्खं, तक्कालाणुरूवणिव्वत्तियकायव्वा गया रइहरं, आलिंगणचुंबणाइपुव्वयं जहिच्छमणुहविऊण रइसुहं खेयकिलंतो समद्धासिओ भट्टो निद्दाए, केरिसो जक्खो ?, संजायकोउयाए पुव्वाणीयसरावसंपुडत्थपदीवुज्जोएण दिट्ठो जणओ, अलमेण्हिं संकाएत्ति, 'सेवेमि निठिवसंकं इण्हिं जणयं तु किं वियप्पेणं?। रंगंमि णच्चियाए अलाहि अंगुट्ठिकरणेणं ॥ १ ॥' भावेंतीए समाढत्तं निव्विसंकं सयलजणमोहणं मोहणं, अच्चंतरइकिलंताणि उग्गएवि दिणयरे न बुज्झंति, ततो पइणो बोहणत्थं पढिया भट्टिणीए मागहिया—'अच्चिलुग्गयए य सूलिए चेइयथूभगते य वायसे । भित्तीगयए य आयवे, सहि! सुहिए हु जणे न बुज्झई ॥ १ ॥' ततो इमं निसामिऊण पढियं से धूयाए—'तुममेव य अंब ! हे लवे, मा हु विमाणय जक्खमागतं । जक्खाहडए हु तायए, अण्णं दाणि विमग्ग तायं ॥ १ ॥' इमं सोऊण भणियं से जणणीए—नव मासा कुच्छि धारिया, पासवणे पुलिसे य मदिए। धूयाए मे गेहिए हडे, सलणे असलणए मे जायए ॥ १ ॥' पच्छा

गयसंको धूयाए सह भोगं भुंजिउं पयत्तो। एत्थ अण्णंपि तिविक्कमकहाणयं तेण कहियं, तं पुण मिच्छत्त-दोसदारंमि कहियं चेव, एत्थुवणओ जहा तीए भाट्टिणीए भट्टस्स य तिविक्कमस्स सरणमसरणं जायं एव-मम्हाणंपि तुमं सरणं चिंतिओ जाव तुमं चिय मुसासि, अतिवियड्ढोऽसित्ति भणंतेण मुट्ठो तसकायदारओऽवि, पुणोऽवि वच्चंतेण दिट्ठा अलंकारभूसिया संजती, तेण भणिया—कडगा य ते कुंडला य ते, अंजियक्खि! तिलयए य ते कए। पवयणस्स उड्डाहकारिए, दुट्ठसेहि! कत्तोऽसि आगया? ॥१॥ तओ तीए भणियं—'राईसरसवमेत्ताणि, परछिद्दाणि पाससि। अप्पणो बिल्लमित्ताणि, पासंतोऽवि न पाससि ॥ १ ॥' तहा 'समणोऽसि संजओ असि, बंभयारि समलेट्ठुकंचणो। वेहारुय वायओ य ते, जेट्ठज्जो! किं ते पडिग्गहे? ॥ २ ॥ एवं ताए उड्डाहिओ समाणो पुणोऽवि गच्छइ, नवरं पेच्छइ खंधावारमेंतं, तस्स कीर निवट्टमाणो दंडियस्सेव सव्वडहुत्तो गतो, तेण हत्थिखंधातो ओरुहित्ता वंदितो भणितो य—भयवं! अहो मम परमं मंगलं णिमित्तं च, जं साधू मए अज्ज दिट्ठो, भयवं! साणुग्गहत्थं फासुयएसणिज्जं इमं मोयगादिसंबलं घेप्पउ, सो णेच्छति, भायणे आभरणगाणि छूढाणि मा दीसिहित्ति, तेण दंडिएण बलामोडिए परिग्गहो गहितो जाव मोयगे छुहइ ताव पेच्छइ आभरणयाणि, तेण सो खरंडिओ, ताहे विलक्खीहूयं

तं दट्ठूण दावियं निययरूवं चेल्लयसुरेण, भणिओ य एसो–किमेयं तए समाढत्तं ?, न जुज्जइ खलु तुम्हाण सयले-
सुओयहिपारगयाणं एवं विबुहजणगरहणिज्जं इयरजणबहुमयं ववसिउंति, सूरिणा भणियं–किं करेमि ? न केणइ देवत्तं
साहियं, तेण दूरं विप्पलद्धोऽम्हि मोहपिसाएणं, चेल्लयसुरेण भणियं–न संपयं बाहुल्लेण तियसावयारो, जओ भणियं–
"संकंतदिव्वपेम्मा विसयपसत्ताऽसमत्तकत्तव्वा । अणहीणमणुयजम्मा ( कज्जा ) नरभवमसुहं न इंति सुरा ॥१॥", ता
न कायव्वो चित्तब्भमो, सव्वहा दढचित्तेण होयव्वं, अओ भण्णइ–जहा तेण चेल्लयसुरेण आयरिओ धम्मे थिरीकओ
तहा कायव्वं । अवात्सल्यमपि वात्सल्याकरणस्वभावं, वात्सल्यं च वात्सल्यभावेन साधर्मिकजनस्य भक्तपानादि-
नोचितप्रतिपत्तिकरणं, तत्र वज्रस्वामी दृष्टान्तः, तत्कथा च मूलावश्यकविवरणे विस्तरेणोक्ता, अत्र तु स्थानाशून्यार्थं
तद्गतमेव किञ्चिदुच्यते, जहा—

तेणं कालेणं तेणं समएणं अवंतीजणवए तुंबवणसन्निवेसे धणगिरी नाम इब्भपुत्तो, सो य सड्ढो पव्व-
इउकामो, तस्स य मायापियरो जत्थ २ तज्जोग्गं कन्नं वरेंति तत्थ २ सो विप्परिणइं करेइ जहाऽहं पव्वइउका-
मोत्ति, इओ य–धणपालस्स दुहिया सुणंदा नाम, सा भणइ–ममं देह, ताहे सा तस्स दिन्ना, तीसे य

भाया अज्जसमिओ नाम पुव्वं पव्वइओ सीहगिरिसियासे, सा अन्नया आवन्नसत्ता संपन्ना, ताहे धणगिरी भणइ-एस ते गब्भो बिइज्जओ होही, अहं पव्वयामित्ति, तओ तीए अणुन्नाओ सीहगिरिसियासे गंतुं पव्वइओ, इमीएवि नवण्हं मासाणं साइरेगाणं दारओ जाओ, तत्थ य महिलाहिं आगयाहिं भण्णइ—जइ से पिया न पव्वइओ होंतो तो लट्ठं होंतं, सो सण्णी जाणइ—जहा मम पिया पव्वइओ, तस्स एवं चिंतंतस्स जाईसरणं समुप्पण्णं, ताहे रत्तिं दिवा य रोवइ जेण निव्विज्जंती अंबा ममं मुयइ, तओ सुहं पव्वयामि, एवं च छम्मासा वोलीणा, अण्णया आयरिया समोसढा, ताहे अज्जसमिओ धणगिरी य आयरियं आपुच्छंति जहा जइ तुब्भे संदिसह तो सन्नायगाणि पेच्छामोत्ति, एत्थंतरंमि सउणेण वाहितं, आयरिएहिं भणियं—महालाभो तुम्हं, अज्ज जं सचित्तं अचित्तं वा लहेह तं सव्वं लएह, इच्छंति भणिऊण गया ते सन्नायिगेहं, उवसग्गिज्जिउमाढत्ता, एत्थंतरंमि अण्णमहिलाहिं भणिया सुनंदा—हला ! एयं दारगं एयाण समप्पेसु, तो कहिं नेहिंति ?, पच्छा ताए भणिओ [ग्रन्थाग्रम्—२०००] धणगिरी—मए एवइयं कालं संगोविओ एत्ताहे तुमं संगोवाहि, पच्छा तेण भणियं—मा ते पच्छायावो भविस्सइ, ताहे सक्खिं काऊण गहिओ छम्मासिओ चोलपट्टएण पत्ताबंधिउं, न रोवइ, जाणइ सन्नी, ताहे तेहिं आयरिएहिं

भाणं भरियंति हत्थो पसारिओ, दिन्नो, हत्थे भूमिं पत्ते भणाति—अज्जो णज्जइ वइरंति, जाव पेच्छंति देवकुमारोवमं दारगंति, भणइ य—सारक्खह एयं, पवयणस्स आहारो भविस्सइ एस, तत्थ से वइरो चेव नामं कयं, ताहे संजतीण दिन्नो. ताहिं सेज्जायरकुले समाप्पिओ, सेज्जायरगाणि जाहे अप्पणगाणि चेडरूवाणि ण्हाणेंति मंडेंति वा पीहगं वा देंति ताहे तस्स पुव्विं, जाहे उच्चाराती आयरइ नाहे आगारं दंसेति कुव्वति वा, एवं संवड्ढइ, फासुयपडोयारो तेसिं इट्ठो, साहूवि बाहिं विहरंति, ताहे सा नंदा पमग्गिया, ताओ य निक्खेवगोत्ति न देंति, सा आगंतूण थणं देइ, एवं सो जाव तिवरिसो जाओ, अन्नया साहू विहरंता आगया, तत्थ ववहारो राउले जाओ, सो भणति—मम एयाए दिण्णओ, नगरं सुनंदाए पक्खियं, ताहे बहूणि खेल्लणगाणि गहियाणि, रण्णो पासे ववहारच्छेदो, तत्थ पुव्वहुत्तो राया दाहिणतो संघो णंदा ससयणपरियणा वामपासे णरव. इस्स, तत्थ राया भणाति—मम कएण तुब्भे जओ चेडो जाति तस्स भवतु, पडिस्सुयं, को पढमं वाहरउ ?, 'पुरिसादीयो धम्मो'त्ति पुरिसो वाहरउ, ततो नगरजणो आह—एएसिं संवयितो माया सद्दावेउ, अवियं—माया दुक्करकारिया, पुणोऽवि पेलवपवत्ता, तम्हा एसा चेव वाहरउ, ताहे सा आसा हत्थी रहवसभे गहिय मणिकण-

गविविहचित्तेहिं बालभावलोभावएहिं पासधरिएहिं भणइ—एहि वइरसामी! एहि, ताहे पलोइंतो अच्छइ, जाणइ—जइ संघं अवमन्नामि दीहसंसारिओ भविस्सामि, अविय—एसावि पव्वइस्सइ, एवं तिन्नि वारा सद्दावितो न एइ, ताहे से पिया भणति—जइ सुकयव्ववसाओ धम्मज्झयभूसियं इमं वइर!। गेण्ह लहुं रयहरणं कम्मरयपमज्जणं धीर! ॥ १ ॥ ताहेऽणेण तुरियं आगंतूण गहियं, लोगेण जयइ धम्मोत्ति उक्कुट्ठी सीहनाओ कओ, ताहे से माया चिंतेइ—मम भाया भत्ता पुत्तो य पव्वइओ, अहं किं अच्छामि ?, एवं साऽवि पव्वइया, सो वइरसामी पव्वाविऊण धणगिरिणा संजईणं चेव सयासे मुक्को, तेण तासिं पासे एक्कारस अंगाणि सुयाणि पढंतीणं, ताणि से उवगयाणि, पयाणुसारी सो भगवं, ताहे अट्ठवारिसओ संजइपडिस्सयाओ निक्कालिओ आयरिअसयासे अच्छइ, आयरिया उज्जेणिं गया, तत्थ वासं पडइ अहोधारं, से य पुव्वसंगइया जंभगा तेणंतेण वोलेंता तं पेच्छंति, ताहे ते परिक्खानिमित्तं उइण्णा वाणियरूवेणं, तत्थ बइल्ले उल्लादित्ता उवक्खडेंति, सिद्धे निमंतिंति, ताहे पट्ठिओ जाव फुसियमत्थि ताहे पडिनियत्तो, ताहे तंपि ठियं, पुणो सद्दावेंति, ताहे वइरो गंतूण उवउत्तो दव्वओ पुस्सफलादि खेत्तओ उज्जेणी कालओ पाउसो भावओ धरणिछिवणणयणनिमेसादिरहिया पहट्ठतुट्ठा य, ताहे देवत्ति काऊण

णेच्छइ, देवा तुट्ठा भणंति–तुमं दट्ठुमागया, पच्छा वेउव्वियं विज्जं देंति, पुणरवि अन्नया जेट्ठमासे सन्नाभूमिं गयं घयपुण्णेहिं निमंतेन्ति, तत्थवि दव्वादिउवओगो, नेच्छितं, तत्थ से णहगामिणी विज्जा दिन्ना, एवं सो विहरइ, जाणि य ताणि पयाणुसारिलद्धीए गहिआणि एक्कारस अंगाणि ताणि से संजयमज्झे थिरयराणि जायाणि, तत्थ जो अज्झाइ पुव्वगयं तंपिऽणेण सव्वं गहियं, जाहे वुच्चति पढाहि ततो सो एंतगंपि कुट्टेंतो अच्छइ अण्णं सुणेंतो, अण्णया आयरिया मज्झण्हे साहूसु भिक्खं निग्गतेसु सन्नाभूमिं निग्गया, वयरसामीवि पडिस्सयवालो, सो तेसिं साहूणं विंटियाओ मंडलीए रएत्ता मज्झे अप्पणा ठाउं वायणं देति, ताहे परिवाडीए एक्कारसवि अंगाणि वाएति पुव्वगयं च, जाव आयरिया आगया चिंतेंति-लहु साहू आगया, सुणंति सद्दं मेघोघरसियमिव, बहिया सुणेंता अच्छंति, नायं जहा वइरोत्ति, पच्छा ओसरिऊण सद्दपडियं निसीहियं करेंति, मा से संका भविस्सइ, ताहे तेण तुरियं विंटियाओ सट्ठाणे ठवियाओ, निग्गंतूण दंडयं गेण्हइ, पाए पमज्जति, ताहे आयरिया चिंतेंति–मा णं साहू परिहविस्संति, ता जाणावेमि, ताहे रत्तिं आपुच्छइ–अमुगं गामं वच्चामि, तत्थ दो वा तिन्नि वा दिवसे अच्छिस्सामि, तत्थ जोगपडिवन्ना भणंति–अम्हं को वायणायरिओ ?, आयरिया भणंति–वइराच्चि, विणीया, तहत्ति पडिसुयं, आयरिया चेव जाणंति, भणियं च–" सीहगिरिसुसीसाणं भद्दं

गुरुवयण सद्दहंताणं । वइरो किर दाही वायणत्ति न विकोवियं वयणं ॥ १ ॥ ( उप० माला ) ते गया, साहूवि पए पडिलेहित्ता वसहिकालनिवेयणादि वइरस्स करेंति, निसेज्जा य से रइया, सो तत्थ विनिविट्ठो, तेऽवि जहा आयरियस्स तहा विणयं पउंजंति, ताहे सो तेसिं करकरस्स सव्वेसिं अणुपरिवाडीए आलावए देइ, जेऽवि मंदमेहावी तेऽवि सिग्घं पढेउमारद्धा, ततो ते विम्हिया, जोऽवि एइ आलावगो पुव्वपढिओ तंपि विन्नासणत्थं पुच्छंति, सोऽवि सव्वं आइक्खइ, ताहे ते तुट्ठा भणंति—जइ आयरिया कइवयाणि दियहाणि अच्छेज्ज तो एस सुयक्खंधो लहु समप्पेज्ज, जं आयरियसगासे चिरेण परिवाडीए गेण्हंति तं इमो एक्काए पोरुसीए सारेइ, एवं सो तेसिं बहुमओ जाओ, आयरियावि जाणाविओत्तिकाऊण आगया, अवसेसं च वरं अज्झाविज्जउत्ति, पुच्छंति य—सरिओ सज्झाओ ?, ते भणंति—सरिओ, एस चेव अम्ह वायणायरिओ भवतु, आयरिया भणंति—होहिई मा तुब्भे परिभवेस्सह अतो जाणावणानिमित्तं अहं गओ, न उण एस कप्पो, जओ एतेण सुयं कण्णाहेडएण गहियं, अओ एयस्स उस्सारकप्पो करेयव्वो, सो सिग्घमुस्सारेइ, बितियपोरसीए अत्थं कहेइ, तदुभयजोगे कप्पोत्तिकाऊणं, जे य अत्था आयरियस्सऽवि संकिया तेऽवि तेण उग्घाडिया, जावइयं दिट्ठिवायं जाणंति तत्तिओ गहिओ, ते

विहरंता दसपुरं गया, उज्जेणीए भद्दगुत्ता णामायरिया थेरकप्पट्ठिया, तेसिं दिट्ठिवाओ अत्थि, संघाडओ से दिण्णो, गतो तस्स सगासं, भद्दगुत्ता य थेरा सुविणगं पासंति, जहा किर मम पडिग्गहओ खीरभरिओ आगंतुगेण आवीओ समासासिओ य, पभाए साहूणं साहेइ, ते अन्नमन्नाणि वागरेंति, गुरू भणंति—ण याणह तुब्भे, अज्ज मम पाडि— च्छओ एहिइ, सो सव्वं सुत्तत्थं घेच्छिहिति, भगवंपि बाहिरियाए वुच्छे ताहे आगओ, दिट्ठो सुयपुव्वो एस सो वइरो, तुट्ठेहिं अवगूहिओ, ताहे तस्स सगासे दस पुव्वाणि पढियाणि, तो अणुण्णानिमित्तं जहिं उद्दिट्ठो तहिं चेव अणु— जाणियव्वोत्ति दसपुरमागया, तत्थ अणुण्णा आरद्धा ताव नवरं तेहिं जंभगेहिं अणुण्णा उवट्ठविया, दिव्वाणि पुप्फ— चुन्नाणि य से उवणीयाणित्ति, तया य सीहगिरी वइरस्स गणं दाऊण भत्तं पच्चक्खाइउं देवलोगं गया, वइरसामीत्रि पंचहिं अणगारसएहिं संपरिवुडो विहरइ, जत्थ२वच्चइ तत्थ२उरालवन्नकित्तिसद्दा परिभमंति—अहो भगवंति, एवं भगवं भ- वियजणविबोहणं करेंतो विहरइ। इओ य-पाडलिपुत्ते णगरे धणो सेट्ठी, तस्स धूया अतीव रूववती, तस्स य जाणसालाए साहुणीओ ठियाओ, ताओ पुण वइरस्स गुणसंथवं करेंति, सब्भावेण य लोगो कामियकामियओ, सेट्ठिधूया चिंतेति—जइ सो मम पती होज्ज तोऽहं भोगे भुंजिस्सं, इयरहा अलं भोगेहिं, वरगा एंति, सा पडिसेहावेइ, ताहे

साहेंति पव्वइयाओ–सो न परिणेइ, सा भणइ–जइ न परिणेइ अहंपि पव्वज्जं गेण्हिस्सं, भगवंपि विहरंतो पाडलिपुत्तमागओ, तत्थ से राया सपरियणो अब्भोगइयाए निग्गओ, ते पव्वइयगा फड्डगफड्डगेहिं एंति, तत्थ बहवे उरालसरीरा, राया पुच्छइ–इमो भगवं वइरसामी ?, ते भणंति–न हवइ, इमो ?, तस्स सीसो, जाव अपच्छिमं वंदं, तत्थ पविरलसाहुसहितो दिट्ठो राइणा, वंदिओ, ताहे उज्जाणे ठिओ, धम्मो यऽणेण कहिओ, खीरासवलद्धी भयवं, राया हयहियओ कओ, अंतेउरे साहइ, ताओ भणंति–अम्हेवि वच्चामो, सव्वं अंतेउरं निग्गयं, सा य सेट्ठिधूया लोगस्स पासे सुणेत्ता किह पेच्छिज्जामित्ति चिंतंती अच्छति, बितियदिवसे पिया विन्नविओ–तस्स देहि, अह णवि अप्पाणं विवादेमि, ताहे सव्वालंकारविभूसियसरीरा कया, अणेगाहिं धणकोडीहिं सहिया णीणिया, धम्मो कहिओ, भगवं खीरासवलद्धीओ, लोओ भणति–अहो ! सुसरो भगवं सव्वगुणसंपन्नो, णवरि रूवविहूणो, जइ रूवं होंतं सव्वगुणसंपया होन्ता, भगवं तेसिं मणोगयं नाउं तत्थ सयसहस्सपत्तं पउमं विउव्वति, तस्स उवरिं निविट्ठो रूवं विउव्वति अतीव सोमं, जारिसं परं देवाणं, लोगो आउट्टो भणति–एयं एयस्स साहावियं, मा पत्थणिज्जो होहामित्ति तो विरूवेण अच्छइ, सातिसओत्ति,

पभूयसंखेज्जदीवसमुद्दे रायावि भणति—अहो भगवओ एयमवि अत्थि, ताहे अणगारगुणे वन्नेइ, जइ ममं इच्छइ तो विउव्वेत्ता०, ताहे तेण रूवेण धम्मं कहेति । ताहे सेट्ठिणा निमंतिओ भगवं विसए निंदइ, पव्वयउ, ताहे पव्वतिया, तेण य भगवया पयाणुसारित्तणओ पम्हुट्ठा महापरिण्णाओ अज्झयणाओ आगासगामिणी विज्जा उद्धरिया, तीए य गयणलद्धिसंपन्नो भगवं जाओ. अण्णया य एवं गुणविज्जाजुत्तो विहरंतो पुव्वदेसाओ उत्तरावहं गओ, तत्थ दुब्भिक्खं जायं, पंथावि वोच्छिण्णा, ताहे संघो उवागओ, नित्थारेहित्ति, ताहे पडविज्जाए संघो चडिओ, तत्थ य सेज्जायरो चारीए गओ एइ, ते य उप्पतिते पासइ, ताहे सो असिएण सिहं छिंदित्ता भणति—अहं भगवं ! तुम्ह साहम्मिओ, ताहे सोवि लइओ इमं सुत्तं संरंतेणं—" साहम्मियवच्छल्लंमि उज्जया उज्जया य सज्झाए । चरणकरणंमि य तहा तित्थस्स पभावणाए य ॥ १ ॥ " ततो पच्छा उप्पइओ भगवं, पत्तो पुरियं नयरिं, तत्थ सुभिक्खं, तत्थ य सावया बहुया, तत्थ य राया तच्चण्णियसड्ढओ, तत्थ अम्हच्चयाणं सड्ढयाणं तच्चण्णिओवासगाण य विरुद्धेण मल्लारुहणाणि वट्टंति, सव्वत्थ ते उवासगा पराइज्जंति, ताहे तेहिं राया पुप्फाणि वाराविओ पज्जोसवणाए, सड्ढा अद्दण्णा जाया, नत्थि पुप्फाणित्ति, ताहे सबालवुड्ढा वइरसामिं उवट्ठिया, तुब्भे जाणह जइ

तुब्भेहिं नाहेहिं पवयणं ओहाभिज्जइ, एवं भणिते बहुप्पयारं गया उप्पइऊण माहेसरिं, तत्थ हुयासणं नाम वाणमंतरं,तत्थ कुंभो पुप्फाण उट्ठेइ, तत्थ भगवतो पितिमित्तो तडितो, सो संभंतो भणइ–किमागमणपओयणं ?, ताहे भणंति-पुप्फेहिं पओयणं, सो भणइ–अणुग्गहो, भगवया भणितो–ताव तुब्भे गहेह जाव एमि, पच्छा चुल्लहिमवंते सिरिस-गासं गओ, सिरीए य चेतियअच्चणियनिमित्तं पउमं छिण्णगं, ताहे वंदित्ता सिरीए निमंतिओ, तं गहाय एइ अग्गिघरं, तत्थऽणेणं विमाणं विउव्वियं, तत्थ कुंभं छोढुं पुप्फाणं ततो सो जंभगगणपरिवुडो दिव्वेणं गीयगंधव्वणिणाएणं आगासेण आगओ, तस्स पउमस्स वेढे वइरसामी ठिओ, ततो ते तच्चण्णिया भणंति–अम्ह परं पाडिहेरं, अग्घं गहाय निग्गया, तं वोलित्ता विहारं अरहंतघरं गया, तत्थ देवेहिं महिमा कया, तत्थ लोगस्स अतीव बहुमाणो जाओ, रायावि आउट्टो समणोवासओ जाओ, सेसकहासंबंधो तत्तो चेव नायव्वो, पगयं च इमं, जहा तेण वइरसामिणा दुब्भिक्खे संघं नित्थारेंतेण साहम्मियवच्छल्लं कयं तहा कायव्वं, जइ न कुणइ तो अइयारोत्ति ।

अप्रभावनाऽपि प्रभावनाऽकरणस्वरूपा, प्रभावना तु [यथा२] तीर्थपराभवादावुपस्थिते तदुन्नतिहेतुचेष्टाप्रवर्तना-त्मिका, तस्यां विष्णुकुमारो निदर्शनं, तत्कथा चेयम्——

विश्वविश्वम्भरासारः, साराढ्यजनताकुलः। कुलकोटीसमाकीर्णपुरग्राममनोरमः ॥ १ ॥ रमानिवासराजीवराजीवर-सरोगणः । गणातीताकरोद्देशो, देशोऽस्ति कुरुनामकः ॥ २ ॥ त्रिदिवमिव तत्र सुरभुवनभूषितं हस्तिनागपुरमस्ति । विबुधजनानन्दकरं सदोप्सरोनिवहरमणीयम् ॥ ३ ॥ ( आर्या ) तस्मिन्नरातिभूपालमत्तमातङ्गकेशरी । शरणायातसामन्तसन्तापजलदोदयः ॥ ४ ॥ उदयप्रतापराजिष्णुर्जिष्णुर्विष्णुसमः श्रिया । निजान्वयसरःपद्मोऽभवत्पद्मोत्तरो नृपः ॥ ५ ॥ सकलान्तःपुरसारा तस्य ज्वालाभिधा प्रियतमाऽभूत् । निजरूपनिर्जितरतिलावण्यविलास-वासगृहम् ॥ ६ ॥ ( आर्या ) तया च सह तस्य नृपतेर्जन्मान्तरोपार्जितपुण्यसंभारसंपादितं बुधजनप्रशंसनीयं जीवलोकसारं पञ्चप्रकारं विषयसुखमनुभवतोऽतिक्रान्तः कियानपि कालः, अन्यदा च सुखशय्यायामनाकुल-निद्रानुविद्धनयनयुगला ज्वाला महादेवी यामिन्याश्चरमयामे स्वप्ने निरभ्ररजनीरजनिकरकरनिकरावदातदेहं स्कन्ध-देशविराजमानकपिलसटाकलापं शारदाभ्रमिव तडिद्वलयालङ्कृतमुपलक्ष्यमाणनिजोत्सङ्गमागतं सिंहपोतं ददर्श, दृष्ट्वा च प्राभातिकप्रहतानवद्यनादप्रतिबोधिता विधाय तत्कालोचितं सकलकरणीयं परमानन्दनिर्भरा भर्तृसकाशमागत्य कथितवती, तेनापि स्वप्नशास्त्रानुसारेण प्रधानपुत्रजन्मादेशसंजनितासमानमनःसम्मदा सा तत्काले समुद्धृतं सुखं-

सुखेन बभार गर्भं, संपाद्यमानयथासमयोपजायमानसकलदोहदा च परिपूर्णसमये प्रसूता देवकुमारोपमं दारकम्, अभिनन्दितो नृपतिः प्रियङ्करिकाभिधानया चेट्या, दत्तमिच्छातिक्रान्तं पारितोषिकं, तदनन्तरं च स्थानस्थानप्रारभ्यमाणवारविलासिनीसार्थनृत्यप्रबन्धं वाद्यमाननानाविधातोद्यनादबधिरिताखिलब्रह्माण्डं बन्दिनिवहविधीयमानविविधप्रस्तावपाठं सकललोकप्रमोदोत्पादकं प्रारब्धं राज्ञा वर्द्धापनकं—यत्र प्रदानमयमिव सम्मदमयमिव सदुत्सवमयं वा । समजनि नगरमशेषं गीतादिविलासमयमिव तत् ॥ १ ॥ समुचितसमये च प्रशस्तेषु तिथिनक्षत्रयोगकरणवारेषु शुभायां लग्नहोरायां प्रतिष्ठितं दारकस्य विष्णुकुमार इत्यभिधानं, वृद्धिं गतो देहोपचयेन कलाकलापेन च, संप्राप्तः सकलजनश्लाघनीयं यौवनं, तत्र च वर्त्तमानो मातापितृसमाराधनपरः परोपकारपरायणः कदाचिद्दिवस इव मित्रमण्डलसमन्वितः प्रश्नोत्तरादिविनोदेन अन्यदा च लक्ष्मण इव रामानुगतो नानाविधविलासनिर्वर्त्तनेन एकदा च समृद्धनृपतिरिव सम्पूर्णविषयग्रामोऽसमानसुखसन्दोहासेवनेन कियन्तमपि कालं निनाय, अन्यदा च पुनरपि ज्वाला चतुर्दशमहास्वप्नसूचितं सुरकुमाराकारं सुकुमारमसूत तनयं, तस्यापि जन्मनि निर्वर्त्तितो राज्ञा महानुत्सवः, कृतं चोचितसमये तस्य महापद्म इति नाम, शुक्लपक्षक्षपाकर इव सह कलाभिः प्रवृत्तो देहोप-

चयेन, क्रमेणाऽऽससाद सकलजनमनोहरं तारुण्यं, निवेशितश्च सजिगीष इति जनकेन यौवराज्ये । इतश्चास्त्युज्ज-
यिन्यां नगर्यां श्रीधर्मनामा नृपतिस्तस्य च नमुचिर्मन्त्री, अन्यदा तत्र समवससार मुनिसुव्रतस्वामिनः शिष्योऽनेक-
मुनिनिवहपरिवृतः सुव्रताभिधानसूरिः, तद्वन्दनार्थं च निजरविभूत्या व्रजन्नालोकितः प्रसादोपर्यवस्थितेन नमु-
चिमन्त्रिसमन्वितेन राज्ञा नगरीलोकः, भणितं च यथा—क्वैष लोकोऽकालयात्रायां गच्छति ?, नमुचिनोक्तं—
देव ! प्रातरश्ववाहनिकागतेन मया श्रुतं यथाऽत्रोद्याने श्रमणाः केचनागता विद्यन्ते, अतस्तद्भक्तो जनोऽयं
तत्पार्श्वे गच्छति, राज्ञोक्तं—वयमपि व्रजामः, नमुचिनाऽभाणि—किंनिमित्तं तत्र युष्माकं गमनं ?, यदि धर्म-
शुश्रूषया तदा वयमेव वेदविहितं सर्वलोकसंमतं भणामो धर्मं, नृपतिनाऽवाचि—सत्यमेतद्, भवता कथ्यते धर्मः,
केवलं तेऽपि द्रष्टव्या महात्मानः, तथाऽवगन्तव्यं च कीदृशं ते धर्मं प्ररूपयन्ति ?, तेनोक्तं—यद्येवं तर्हि गम्यतां, किन्तु
तत्र गतैर्युष्माभिर्मध्यस्थैरासितव्यं येनाहं तान् वादेन जित्वा निरुत्तरान् करोमि, तत एवमस्त्विति प्रतिपन्ने नृपेण
सामन्तादिलोकसमेता गतास्ते, तत्र च दृष्टः प्रथमागतनागरकजनस्य धर्मदेशनां कुर्वाणो मुनिमण्डलमध्यवर्ती
शशीव तारानिकरपरिकरितः सुव्रताचार्यः, प्रणम्य तं यथास्थानमुपविष्टेषु नरेन्द्रादिष्वकस्मादेवोक्तं सूरिसम्मुखं नमु-

चिमन्त्रिणा—यथा भो ! भो ! यावत्सम्यग्विभाव्यते तावदज्ञातपरमार्था यूयं, यतः प्रत्यक्षानुभूयमानानन्दस्वरूपं विषयसुखमुत्सृज्याङ्गीकृतः सर्वपाषण्डिभू(दू)षितो विशिष्टजनपरिहृतो जिनधर्मः, तथा निजश्रियं परित्यज्य स्वीकृता भिक्षा, यद्वा मलमलिनदेहानामशुचितया पिशाचोपमानानां मुण्डितमुण्डतुण्डानां कियदेतत् ? अपिच—यत्र त्रिपुरुषपूजा न समस्ति हविर्भुजो न वा हवनम् । न द्विजजनप्रदानं धर्मः स कथं भवति मूढ ? ॥ १ ॥ इत्याकर्ण्य अहो ! मूर्खशठोऽयमसमीक्षितवादी तत्किमस्योत्तरदानेनेति विचिन्त्य तूष्णीं स्थितः सूरिः, यत उक्तम्—" विद्वानृजुरभिगम्यो, विदुषि शठे चाप्रमादिना भाव्यम् । मूर्खार्जवोऽनुकम्प्यो मूर्खशठः सर्वथा त्याज्यः ॥ १ ॥" स च हतप्रतिभ एव मुण्डो न किञ्चिदुत्तरं दातुं शक्नोतीति चिन्तयंस्तदुत्प्रासनार्थं पुनः पुनस्तदेव भणितुमारेभे, ततो भणितः सूरिणाऽसौ —भो भोः किमेवमसम्बद्धमुल्लपसि ?, यदि जल्पसामर्थ्यमस्ति तदा कुरु पूर्वपक्षं पञ्चावयववाक्योपन्यासेन, अत्रान्तरे पादयोर्निपत्य विज्ञप्तं सविनयमेकेन विनेयेन, यथा—भगवन् ! कोऽयं ? यदस्योपरि एवं संरम्भः समारभ्यते भवद्भिः, यतः—" गण्डस्थलोल्लसदमन्दमदप्रवाहगन्धावबद्धमधुपोद्धुरवारणेन्द्राः । एकैकघातवशतोऽपि पतन्ति यस्य, तस्य क्रमः किमु चकास्ति हरेर्मृगेषु ? ॥ १ ॥ " तदलमाक्षेपेण, दीयतामादेशो मह्यं येनापनयामि वादगर्वमेतस्य,

ततोऽनुज्ञातो गुरुणा स मन्त्रिणं भणितुमुपचक्रमे—भो यत्त्वयोक्तम्—आनन्दरूपं विषयसुखं, तदसम्बद्धं, यतः केषाञ्चिदसमसमुल्लासितसद्विवेकानां विषविकारसममेव विषयसुखमाभाति, तथाहि—त एवं चिन्तयन्ति, यथोक्तं व्यासेन—" एकैकशोऽपि निघ्नन्ति, विषया विषसंनिभाः। किं पुनर्न विवेकात्मा, यः समं पञ्च सेवते ॥ १ ॥" अन्येषां तु मोहावष्टब्धचेतसां यद्यप्यानन्दरूपं प्रतिभाति तथाऽपि तेषामपि विद्युल्लताविलसितमेव स्तोककालिकमेतद्, यत उक्तम्—" सुखास्वादलवो योऽपि, संसारे सत्समागमात्। सवियोगावसानत्वादापदां धुरि वर्त्तते ॥ १ ॥" किञ्च—" सुरतसुखं खलमैत्री सन्ध्यारागः सुरेन्द्रकोदण्डम्। कलिकालयौवनं जीवितं च सर्वाण्यनित्यानि ॥ १ ॥" यच्चोक्तं 'सर्वपाषण्डदूषितो जिनधर्मः,' तदप्ययुक्तं, यतः सकलपाषण्डिनामपि प्राणातिपातादिपरिहारात्मको धर्मः सम्मत एव, तथा चोक्तम्—" पञ्चैतानि पवित्राणि, सर्वेषां धर्मचारिणाम्। अहिंसा सत्यमस्तेयं, त्यागो मैथुनवर्जनम् ॥ १ ॥" 'विशिष्टजनपरिहृत'मिति यदुक्तं तदप्यसङ्गतं, यतः सर्वस्यापि धर्मस्य दया मूलं, सा चाविकलाऽत्रैव, यथावज्जीवतत्त्वपरिज्ञानात्, नान्यथा, अतोऽयमेव विशिष्टजनैराद्रियते सम्पूर्णधर्म्मफलकाम्यया, यच्च निजश्रियं परित्यज्येत्याद्युक्तं तद्दूषणमेव न भवति, लक्ष्मीपरित्यागभिक्षाटनाङ्गीकारयोः सकलधार्मिकाभिप्रेतत्वात्, तथाहि—

लक्ष्मीः तावत्प्राणिनां सकलव्यसनमूलमिति त्याज्या, तथा चोक्तम्–“या गम्याः सत्सहायानां, यासु खेदो महद्भयम्। तासां किं यन्न दुःखाय, विपदामिव सम्पदाम्? ॥ १॥” इति, भिक्षा तु विशिष्टगुणेत्युपादेया, तथा चार्षम्–“ अव-धूतां च पूतां च, मूर्खाद्यैः परिनिन्दिताम्। चरेन्माधुकरीं वृत्तिं, सर्वपापप्रणाशिनीम् ॥ १ ॥” तथा–“ एकान्नं नैव भुञ्जीत। बृहस्पतिसमादपि। चरेन्माधुकरीं वृत्तिमपि म्लेच्छकुलादपि ॥ २॥” यद्वा (च)‘ मलमलिने ’त्याद्युक्तं तत्रापि मुनिजनस्य शास्त्रे स्नाननिषेधान्मलधारित्वं न दूषणं, यथोक्तं भवदार्षे–“ स्नानं मददर्पकरं, कामाङ्गं प्रथमं स्मृतम्। तस्मात्कामं परित्यज्य, न स्नान्तीह दमे रताः ॥ ३ ॥” अशुचित्वं च ब्रह्मचारिणां भवदागम एव ‘ ब्रह्मचारी सदा शुचि ’ रित्यादौ निषिद्धम्। शिरस्तुण्डमुण्डनमपि व्रतिनां शास्त्रोक्तमनुपालयतां भूषणं, न दूषणं, यच्च ‘ यत्र त्रिपुरुषपूजा न समस्ती’ त्याद्युक्तं तत्र त्रिवक्षितत्रिपुरुषीपू(जा पू)जैव न भवति, रागाद्यनुगतत्वादितरपुरुष-वद्, रागाद्यनुगतत्वं चाङ्गनादिपरिग्रहादिलिङ्गान्यथानुपपत्तेः, तथा चोक्तम्–“ कश्चिद्रागी भवति हसितोद्गीतनृत्य-प्रपञ्चः, प्रद्वेष्टयन्यः प्रहरणगणव्यग्रपाणिः पुमान् यः। बिभ्रन्मोही स्फटिकविमलामक्षमालां यतस्ते, तल्लिङ्गानामभ-वनमतः सर्ववित्त्वं विरागः ॥ १ ॥” हविर्भुजो हवनमपि प्राणातिपातकारणत्वान्न सुन्दरं, प्राणातिपातकारणत्वं चास्य

भवदागमे हविर्भुजः शूनापञ्चकमध्ये पठितत्वाद्, यथोक्तम्—" कण्डनी पेषणी चुल्ली, उदकुम्भः प्रमार्जनी ।
पञ्च शूना गृहस्थस्य, तेन स्वर्गं न यात्यसौ ॥ १ ॥ " न च हिंसानुगतमप्येतद्विहितानुष्ठानत्वात्स्वर्गायेति वच-
नीयं, यदाह व्यासः—"यूपं छित्त्वा पशून् हत्वा, कृत्वा रुधिरकर्दमम् । यद्येवं गम्यते स्वर्गे, नरके केन गम्यते ? ॥१॥"
दानं च यन्मोक्षार्थिभिर्दीयते तत्पात्रमन्विष्य देयं, नैवमेव, पात्रं च विषयविरक्तत्वादिगुणोपेतं श्लाघ्यते, तस्यैव
संसारसागरपतज्जनरक्षणक्षमत्वात्, तथा चोक्तम्–‘ विषयी विषयासक्तं, सधनः सधनं गृही गृहिणमेव । सारम्भः
सारम्भं, न तुल्यदोषस्तु तारयति ॥ १ ॥ विषयी विषयविरक्तं, सधनोऽसधनं गृही गृहविमुक्तम् । सारम्भोऽनारम्भं,
संचिन्त्य भवार्णवं तरति ॥ २ ॥ " एते च विषयविषपूर्णमानसाः कथं पात्रभूता भवन्ति ? इत्याहतप्रत्याहत्या
यावदसौ मध्येसभं निरुत्तरीकृतस्तावत्साधुजनस्योपरि महान्तं प्रद्वेषं गतः, ततो रात्रावाकृष्टखड्गः समागतो मुनि-
हननार्थं, स्तम्भितो देवतया, प्रभाते च तदाश्चर्यमालोक्य राजा लोकश्च मुनिसमीपसमाकर्णितधर्माधर्मफलः
समुपशान्तोऽङ्गीकृतवान् जिनधर्मं, नमुचिस्तु तथाऽपमानितो विलक्षीभूतो गतो हस्तिनागपुरं, महापद्मस्य मन्त्री
जातः, तस्य च तदा सिंहबलनामा दुष्टसामन्तो विषमदुर्गबलेन देशमुपद्रवति, ततो महापद्मेन पृष्टो नमुचिः,

यथा—जानासि कमप्युपायं सिंहबलग्रहणे ?, नमुचिनोक्तं—सुष्ठु जानामि, ततो गत्वा तद्देशं निपुणोपायेन भङ्क्त्वा दुर्गं सिंहबलं च गृहीत्वा समागतो नमुचिः, अतितुष्टेन राज्ञा वरं वृणीष्वेत्युक्तोऽब्रवीन्मन्त्री—यदा याचिष्ये तदा दद्याः, एवं च यौवराज्यमनुपालयति महापद्मः, कदाचित्तदीयमात्रा ज्वालया कारितो जिनरथः, अन्यया च लक्ष्म्यभिधानया विमात्रा ब्रह्मरथः, तयोश्चान्योऽन्यं विवादे प्रथमरथभ्रमणविषये समुत्पन्ने पद्मोत्तरेण नरपतिना द्वयोरपि निवारितौ रथौ, ततो महापद्मकुमारस्तमेवापमानं मन्यमानो निजमातुर्गतोऽकथयन्नेव महाटवीं, तत्र स्थित्वा तापसाश्रमे कानिचिद्दिनानि जनमेजयनरपतेः पुत्रिकायां नागवतीकुक्ष्युत्पन्नायां मदनावल्यां कालनरेन्द्रेण सह युद्धे समापतिते निजपितुः पलायिते दिशो दिशमन्तःपुरादिपरिकरे भयेन तत्रैव तापसाश्रमे समागतायां प्रथमदर्शन एव दर्शितानुरागायां जातानुरागः कुलपतिना विसर्जितो गच्छन् प्राप्तः सिन्धुनन्दनपुरम्, तत्रोद्यानिकामहोत्सवे मदोन्मत्तमहाकरिणो विमोच्य क्रीडन्तं नगरनारीजनं समानिनायालानस्तम्भमेतं महाकरिणं, विज्ञातव्यतिकरोऽसौ राज्ञा तत्रत्येन परिणायितः कन्याशतं, मनसा च समुद्वहति सदैव मदनावलीं, तिष्ठंश्च विशिष्ट-सौख्येन अन्यदा रात्रौ सुप्तोऽपहृतो विद्याधराङ्गनया वेगवत्या, निद्रावसानावेदितापहारकारणयावत्तदा (च तया) नीतोऽसौ

